# सुगमा

## श्रीशाङ्करीयाध्यासभाष्यव्याख्या

व्याख्याननिर्मातारः

श्रीसच्चिदानन्देन्द्रसरस्वतीसंयमिनः

क्रमाङ्कः ९०

प्रकाशनस्थानम् :

अध्यात्मप्रकाशकार्यालयः

होळेनरसीपुरम्

## Publishers' Note

We are extremely happy that we have, at last, been able to bring out the **Sugama**, a new and original Commentary on the renowned "Adhyasa Bhashya" of Sri Shankaracharya, by the eminent Vedantic Scholar Sri Swami Satchidanandendra Saraswati.

Those who are already acquainted with the "Mulavidya Nirasa" written by Sri Swamiji in his former Ashrama, will naturally expect from his pen a brilliant exposition of Shankara's doctrine of Adhyasa, that crux in the Sutra Bhashya in the unravelling of which many an able hand has tried its skill. And they will not be disappointed either, for here the reader is treated to a most lucid and delicious presentation of the teaching, which, far from being a mere dogmatic speculation or a theological discussion based upon faith and Vedantic texts, is shown to be a statement of fact of universal experience of the utmost importance to philosophy. In the course of the book will be found many interesting and illuminating criticisms of other views which, in the opinion of the author, have failed to recognize the unique position of Adhyasa or Avidya, which lies altogether beyond the pale of all reasoning and Pramanas or means of right knowledge.

His preface to the work is in itself a distinct contribution to Vedantic thought in as much as it throws abundant light on the doctrine of Adhyasa, which, rightly handled, serves as the masterkey to unlock all apparently conflicting statements of Shankara Vedanta.

---

### Publisher's Note to Second Edition

This book printed during 1955, was out of print since a long time As there was a great demand from the readers, we take pleasure in bringing out this second edition for the benefit of the Seekers of Truth.

Holenarsipur
30.12 1999

A. Thandaveswara
A.P. Karyalaya

# प्रास्ताविकम्

निश्चप्रचमिदं वेदान्तसिद्धान्तनिष्णातानां महात्मनां यज्जाग्रत्स्वप्यन्वर्थजगद्गुरुश्रीशङ्करभगवत्पादानुगृहीतेषु प्रस्थानत्रयभाष्येषु सर्ववेदान्ततात्पर्यनिर्णायकत्वेन मुमुक्षुमनश्चकोरचन्द्रिकायमाणेषु, प्रसन्नगम्भीरायां तदुपदेशगङ्गायां पूर्णावगाहमलभमानैः कैश्चित्कापिलकाणादपातञ्जलादितन्त्रान्तरीयदर्शनसंकलीकरणमलीमसचित्तैरन्यथान्यथा व्याख्यानचालितचित्तत्वात् कांदिशीकतां प्राप्ता मोमुह्यन्ते वेदान्तार्थबुभुत्सव इति । तामेतां जिज्ञासुचित्तदुरवस्थामालक्ष्याऽहं विवेकतो भाष्यकाराशयनिर्धारणार्थं सर्वभाष्यदुर्गप्रवेशमर्मस्थानीयशारीरकमीमांसाभाष्योपोद्घातग्रन्थग्रन्थिभेदनक्षमां सुगमां नाम्नीं व्याख्यां कतिपयहायनेभ्यः प्रागेव विरचिताम् इदानीं तत्प्रकाशने बद्धादराणामध्यात्मप्रकाशकार्यालयसमितिसभ्यानामभ्यर्थनया सपरिष्कारं संपादितवानस्मि ।।

भगवद्भाष्यकाराभिमतवेदान्तप्रक्रियायाः केन्द्रभूतोपदेशोऽयं यत् प्रत्यस्तमिताशेषविशेषमवाङ्मनसगोचरं विश्वस्याऽऽत्मभूतमेकमेवाऽद्वितीयं स्वयंप्रकाशं वस्तु परमार्थसत्यम्, तस्मिंस्तु प्रमातृप्रमाणप्रमेयविभक्तोऽयं प्रपञ्चोऽविद्यापरिकल्पित इति । सेयमविद्याऽध्यासलक्षणा मृषारूपस्याऽनात्मनो देहकरणसंघातलक्षणस्याऽहन्ताममताभिमानगोचरत्वमापाद्याऽसङ्गेऽपि परमात्मनि मिथ्याप्रमातृतां प्रथयन्ती तयोरात्मानात्मनोरितरेतरत्वेतरेतरधर्मवत्त्वाध्यवसानात्मकमिथ्याज्ञानमात्रविग्रहा सती, प्रत्यक्षादिप्रमाणानि

तत्संनिधापितमनेककर्तृभोक्तृगर्भगृहं नियतदेशकालनिमित्तक्रियाफल-वैचित्र्यचित्रीकृतं च प्रपञ्चमवभासयति । तदेवं स्वयं नित्यशुद्ध-बुद्धमुक्तस्वभावोऽप्ययं लोको नैसर्गिकाविद्यावशात् प्रमातृत्वरागद्वेषादि-मत्त्वकर्तृत्वभोक्तृत्वाभिनिवेशग्रस्तः स्वकर्मणो-च्चावचफलान्यनुभवन् इव ससांरमहास्वापानर्थभाग्भवति । शास्त्राचार्याभ्यां प्रतिबोधितस्त्व-संसारी परमात्मैवाऽहमिति विद्यां प्राप्य प्रमातृताप्रमुखकृतं बन्धमवधूय स्वात्मन्यवस्थानरूपं निःश्रेयसं भजते ॥

यद्यपि वेदान्तशास्त्रमपि प्रमाणत्वाविशेषादध्यासपुरःसरमेव प्रवृत्तम्, तथापि ब्रह्मणः प्रमेयतामध्यारोपदृष्ट्याऽङ्गीकृत्यैव क्रम-क्रमेण प्रमातृप्रमाणप्रमेयव्यवहारस्य सर्वस्याप्यविद्याप्रत्युपस्थापितत्वं विज्ञाप्य जिज्ञासोः प्रमातृत्वमेव निवर्तयत् ब्रह्मणः प्रमेयतामिवात्मनः प्रमाणतामपि निवर्तयतीत्यन्त्यं प्रमाणमिति परिभाष्यते ॥

इदं च शास्त्रमध्यारोपितस्वप्रामाण्यदशायां तत्तत्प्रमातृभ्यो यथाधिकारं ब्रह्मणो जीवाद्भिन्नत्वं सर्वज्ञत्वं सर्वशक्तित्वं जगज्जन्म-स्थितिलयहेतुत्वं तत्तत्फलार्थिभिरुपास्यत्वं तत्तदुपासनानुरूपरूप-गुणादिविशिष्टत्वं सर्वकर्मोपासनाफलाध्यक्षत्वं सर्वभूताधिवासत्वं मुमुक्षुजनजिज्ञास्यत्वं शास्त्रप्रमाणकत्वं सत्यज्ञानानन्दादिस्वरूपत्वं सर्वभूतान्तरात्मत्वं सर्वान्तर्यामित्वं सर्वसाक्षित्वं केवलत्वं निर्गुणत्वं चोपदिशति । जगतश्च परमेशितुरात्मस्थाभ्यां स्वात्मनस्तत्त्वान्य-त्वाभ्यामनिर्वचनीयाभ्यां नामरूपाभ्यामविद्याकल्पिताभ्यां माया-शब्दव्यपदेश्याभ्यां व्याकृताव्याकृतावस्थाभाग्भ्यां प्रतीतिमत्त्व-मुपदिशति । जीवानां च नामरूपकृतकार्यकरणसंघातवत्त्वं

रागादिदोषवत्वं कर्तृत्वं भोक्तृत्वम् अवस्थात्रयसंचारित्वं शास्त्राधिकृतत्वं कर्मोपासनानुष्ठातृत्वं स्वानुष्ठितफलभोगार्थं जन्मान्तरलोकान्तरगन्तृत्वं चोक्त्वा यथायथम्, संसारे विरक्तानां मुमुक्षुत्वं जिज्ञासुत्वं गुरूपसर्पणादिकं चोपदिश्य, तदनु सर्वाध्यारोपितापवादावसरे 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति ॥' (तै. ३-९), 'तत्सत्यं स आत्मा तत्त्वमसि' (छां. ६-८-७), 'अस्थूलमनणु ....' (बृ. ३-८-८), 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' (छां. ७-२४-१), 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छां. ८-१२-१), 'ब्रह्मैवेदं विश्वम्' (मुं. ३-१-११), 'आत्मैवेदं सर्वम्' (छां. ७-२५-२), 'स एष नेति नेत्यात्मा' (बृ. ३-९-२६....) इत्यादिवचनैः सर्वानपि विशेषानपन्हूय परमार्थस्वाराज्य एवाऽभिषेचयति जिज्ञासून् । अभिषेचयदेव च स्वस्यापि प्रामाण्यमपह्नुते 'अत्र वेदा अवेदाः' (बृ. ४-३-२२) इति ॥

विद्याविद्याविभागश्चोपरिप्रदर्शितः परमार्थतो नैव विद्यते । यतो नित्यशुद्धबुद्धमुक्तस्वभावमेवाऽऽत्मतत्वमिति स्फुटमेवेदं सूक्ष्मदृशाम् । जीवेषु जिज्ञासुत्वमध्यारोप्य हि तेषां ब्रह्मात्मैकत्वोपदेशक्रमोऽयं प्रतानित उपनिषत्सु । तदेतद्रहस्यमजानन्तो जानन्तो वा विस्मरन्तोऽस्मदीया एव केचिदविद्यास्वरूपे सर्वानुभववेद्येऽपि विविधं विकल्पयन्तः सर्वप्रमाणप्रसूमप्यविद्यां प्रत्यक्षादिभिः प्रमाणैः प्रमातुमीहन्ते । विदेहमुक्तिरेव मुख्या मुक्तिरिति पश्यन्ति, बोधयन्ति च स्वविनेयानित्यहो दौर्भाग्यमिदं पुरस्थितमप्यमृतं

मूत्रत्वशङ्कया परित्यक्तवत उदङ्कस्य वृत्तमनुसरतामद्यतनजिज्ञासूनां केषांचित् । यथा तु शाङ्करे दर्शने शास्त्रजनितात्मैकत्वविद्या नैसर्गिकप्रमातृत्वमिथ्याबुद्धिबाधिका, ब्रह्मात्मैकत्वं च प्रत्यक्षावगमं फलं तथा मयाऽत्र सुगमायां व्याख्यायां प्रतिपाद्य तत्त्वं बुभुत्सूनां विचारचक्षुरुन्मीलितम् । यथा हि मन्दान्धकारे दृष्टा रज्जुः सर्पत्वेनाऽवभासमाना भ्रान्तैः साक्षादनुभूयते भयकम्पादिहेतुश्च भवति, दीपादिना प्रकाश्य 'नायं सर्पो रज्जुरेवेयम्' इति केनचित्कारुणिकेनोपदिष्टा च तथैवाऽनुभूयते, एंवमेव खलु स्वाभाविकप्रमातृत्वप्रत्ययापबाधकः शास्त्रजन्यासंसारिप्रत्ययोऽप्यनु-भूयत एव प्रत्यक्षम् । न हि देहेन्द्रियाद्यभिमानयुता प्रमाताऽहमिति नैसर्गिकी बुद्धिर्न दृश्यते सर्वस्मिन्नपि जने केनचिदशिक्षितेऽपि । न च देहेन्द्रियमनोबुद्ध्यहङ्कारेभ्यो व्युत्थाप्य श्रुत्याचार्याभ्यां कूटस्थनित्यदृक्स्वरूप आत्माऽसीति प्रतिबोधितेन तेनैवाऽऽपरोक्ष्येण नानुभूयते स्वात्मा । न चैवमनुभूयमाने सर्वसाक्षिणि स्वात्मनि देहादिसंसर्गः शक्यशङ्को भवति । सुषुप्तिसमाध्यादौ देहादिप्रतीतेः सुतरामभावेन तत्परिभावनयाऽशरीरत्वबुद्धि-दार्ढ्यादनतिशङ्कनीया भवति श्रुतिः 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' (मुं. ३-२-९) इति विज्ञापयन्ती । न च तस्मिन्नित्यकूटस्थ-सच्चिदानन्दस्वरूपेऽनित्यविद्याविद्याधिकरणत्वं स्वप्नेऽपि संभावयितुं शक्यमिति ॥

प्रमात्रादिप्रपञ्चस्य परमात्मन्यध्यस्तत्वोक्त्यैवैतत् सिद्धं भवति यदात्मप्रपञ्चयोः सत्यनृतयोर्न कश्चन वास्तवः संबन्धः शक्यसंभावन

इति । न हि रज्जुसर्पयोः कश्चन शब्दव्यपदेशार्हो मनः प्रत्यय-विशेषपरिच्छेद्यो वा संबन्धः समस्ति : अत एव परमार्थवस्तुभूतः परमात्मा न प्रपञ्चस्य केनचिदपि धर्मेण कदाचिदपि कथंचिदपि संपृच्यते । तथा च प्रपञ्चाध्यासकृतस्तदपवादकृतो वा न कश्चिदपि विशेषः कदाचिदप्यात्मनि भवेत् । न हि शुक्तिरज्ज्वादिषु रजतसर्पादिविकल्पनया तदपगमेन वा कश्चिद् विशेषः स्यात् । तद्वत् । परमार्थदृष्ट्या तु प्रपञ्चस्य सतत्त्वनिरूपणायां तस्य परात्मना तादात्म्यसंबन्ध एवेत्यवगम्यंते । यो ह्ययमनात्म-प्रत्ययगोचरत्वेन प्रत्यवभासतेऽध्यासकाले विविधः प्रपञ्चः, स तदानीमप्यात्मैव परमार्थतः, न त्वात्मनोऽन्यः कश्चन प्रपञ्चो नामाऽस्ति । अनात्मप्रत्ययस्तु सर्वोऽविद्यात्मक एव रज्ज्वामिव सर्पप्रत्ययः । 'आत्मैवाऽधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्ता-दात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वम्' (छां. ७-२५-२) इति श्रुतेः ॥

तदेवं श्रुतियुक्त्यनुभवैकीकारं परमं शिवं शान्तमद्वैत-मात्मवस्तुसाक्षात्कारयन्नयं वेदान्तसूत्रभाष्योपोद्घातग्रन्थो मूर्त्या स्वल्पोऽप्यर्थतो निरतिशयमहिम्ना वेदान्तग्रन्थराशिमध्ये चकास्तीति मन्वानेन मया सर्वैर्दुरासदोऽयं शाङ्करभाष्याध्वा मुमुक्षूणां सुगमो यथा स्यात् तथा निष्कण्टकः कर्तव्य इति तत्र तत्र परमतखण्डनमपि मनाक् कटाक्षीकृतं न तु खण्डनव्यसनितयेति क्षन्तव्योऽयं मेऽपराधः सद्भिः ॥

भगवत्पादाभिमतविशुद्धवेदान्तप्रक्रियाभक्तिप्रणुन्नेन मया तदुक्त्युपजीविनैव कृतेयमध्यासभाष्यव्याख्या मम तावदेवं

संतुष्टिकारणं यत्तामेनां तेभ्य एव जगद्गुरुभ्यः सप्रश्रयं समर्पयामीति । यदि पुनरियमन्येषामपि केषांचिद् वेदान्तपरिशीलनकुशलानां सहृदयानां सुधियामीषन्मोदस्थानं विचारप्रचोदनस्थानं वा भवेत् तावतैवाऽतीव धन्यं मन्येयाऽऽत्मानम् ।।

तमिमं ग्रन्थमामूलचूडमेकवारं परीक्ष्य तत्रतत्रोपयुक्तांशसूचन पूर्वकं स्वाभिप्रायाविष्करणेन सहायीभूतयोः (१) पण्डितप्रवरो साहित्य वेदान्तविद्वानित्यादिबिरुदाङ्कितो ब्रह्मश्रीयुक्तः कोडूरु कृष्णजोयिस-शर्मा श्रीशृङ्गगिरिशङ्कराचार्यपीठाधिपास्थानविद्वान्, (२) वेदान्त-शिरोमणीत्यादिबिरुदाङ्कितो, मद्राससकलविद्यानिलयतोऽधिगत-पौरस्त्यविद्याप्रावीण्यप्रशस्तिपत्रो (Certificate of Proficiency in Oriental Learning) ब्रह्मश्रीयुक्तो एस्. विठ्ठलशास्त्री महीशूर-राजास्थानविद्वांश्चेत्येतयोः पण्डितप्रकाण्डयोर्धन्यवादं सनारायण-स्मरणमिहोल्लिखामि । अन्ते च यत्प्रसादादयं मदीयाऽल्पकृतिर्निर्विघ्नं परिसमाप्तिमगमत्, यं च स्वे महिम्नि यदि वा न महिम्नि प्रतिष्ठितं प्राह श्रुतेरमोघवाणी, यस्य च तत्सर्वस्याऽऽत्मभूतं तत्वं स्वेनैव श्रीशङ्कराचार्यरूपेणाऽवतीर्णे न स्वनिर्मितलोकोत्तरभाष्यभासा-मादृशामपि मतौ प्रतिबिम्बितमकारि, तं परमशिवं भगवन्तं पुरुषोत्तमं नारायणं सकार्तज्ञं स्मारं स्मारं प्रणमामि ।

| | |
|---|---|
| मन्मथसंवत्सरे | इति विज्ञापयति |
| अधिकभाद्रपद बहुल त्रयोदश्यां | श्रीशङ्करस्मरणबलावलम्बी |
| सौम्यवासरे | सच्चिदानन्दसरस्वती भिक्षुः |

# द्वितीयमुद्रण प्रस्तावनम्

वेदान्ततत्त्वविचारजिज्ञासूनां महाजनानां अभिमानपूर्वकेण संहकारेण ग्रन्थस्यास्य प्रथममुद्रणप्रतिकृतयः बहोः कालात् पूर्वमेव विक्रीता अंभूवन्। अतश्चेदानीं द्वितीयवारं ग्रन्थरत्नस्यास्य पुनर्मुद्रिकां वाचकेभ्यः समर्पयितुं महान्तं मोदमावहामः ।।

प्रमाथिनामसंवत्सरस्य
मार्गशीर्ष कृष्णाष्टम्यां गुरुवासरे
३०.१२.९९

प्रकाशकाः

# विषयानुक्रमणिका

निर्वाहाय (२१) - अधिष्ठानस्य पुरोऽवस्थितत्वमपि न नियमेनापेक्ष्यतेऽध्यासे (२२) - संभावनाग्रन्थस्योपसंहारः (२३)।

## ४. विद्याऽविद्याविवेकभाष्यम्

आत्मानात्माध्यास एवाविद्या (२४) - अध्यासेऽविद्याशब्दप्रवृत्तिनिमित्तम्, तत्रैकीयमतोपन्यासः (२५) - उक्तमतनिराकरणम् (२६) - तत्रैव मतान्तरं तन्निराकरणं च (२७) - अध्यासस्याविद्यात्वं विद्याविरोधित्वात्, तन्निवर्त्यत्वाच्च (२८) - विद्यास्वरूपम् (२९) - अविद्यास्वरूपविषये केषांचिन्मतम् (३०) - उक्तमतं भाष्यबहिर्भूतं युक्त्यपेतं च (३१) - अविद्याविषये मतान्तरम् (३२) - उक्तमतस्यापि भाष्यविरुद्धत्वम् (३३) - अध्यासनिरूपणफलम् (३४)।

## ५. व्यवहारमात्रस्याविद्यकत्वप्रतिपादकं भाष्यम्

ग्रन्थसंबन्धः (३५) - लौकिकव्यवहारस्याध्यासपुरस्सरत्वप्रतिज्ञा (३६) - शास्त्रव्यवहारस्याप्यध्यासपूर्वकत्वम् (३७) - प्रमाणानामविद्यावद्विषयत्वे शङ्का (३८) - शास्त्राणि च नैवाविद्यावद्विषयाणीति शङ्का (३९) - अविद्यासद्भावप्रदर्शनग्रन्थावतारः (४०) - प्रमाणप्रवृत्तिनिरूपणेन तद्व्यवहारस्याविद्यापुरस्सरत्वसमर्थनम् (४१) - देहात्मनोः संबन्धस्याध्यासिकत्वे शङ्कासमाधाने (४२) - प्रमाणानामविद्यापुरःसरत्वोप-

पादनोपसंहारः (४३) - पुरुषप्रवृत्तिनिरूपणेन प्रमाणादिव्यवहार-स्याऽविद्यापुरस्सरत्वसमर्थनम् (४४) - पुरुषव्यवहारस्य पश्वादि-व्यवहारसाम्यप्रदर्शनम् (४५) - पुरुषव्यवहारस्याविद्यापुरस्सर-त्वनिगमनम् (४६) ।

## ६. शास्त्रव्यवहारस्याप्यविद्यापुरस्सरत्वप्रदर्शकं भाष्यम्

ग्रन्थसंबन्धः (४७) - शास्त्रीयव्यवहारविषयेऽभ्यधिका शङ्का (४८) - उक्तशङ्कापरिहारः (४९) - अविद्या न प्रमाणगम्या, किंत्वनुभवैकगम्या (५०) ।

## ७. अध्यासप्रकारप्रदर्शनभाष्यम्

अध्यासलक्षणानुवादः (५१) - आत्मन्यनात्मधर्माणा-मध्यासप्रकाराः (५२) - साक्ष्यहंप्रत्ययिनोरन्योन्याध्यासः (५३) - भाष्योपात्तसर्वसाक्षित्वविशेषणकृत्यम् (५४) ।

## ८. अध्यासविचारोपसंहारभाष्यम्

ग्रन्थसंबन्धः (५५) - अध्यासविशेषणानां विवरणम् (५६) - अध्यासस्यानाद्यनन्तत्वोपपादनम् (५७) - अध्यास-स्यानादित्वानन्तत्वयोरेकदेशिव्याख्यानं तन्निराकृतिश्च (५८) - अध्यासस्य कर्तृत्वभोक्तृत्वप्रवर्तकत्वम् (५९) - अध्यासस्य सर्वानुभवसिद्धत्वम् (६०) ।

## ९. मीमांसावतरणिकाभाष्यम्

अध्यासवर्णनं न शास्त्रसूत्रसङ्गतमिति शङ्का (६१) - अध्यासवर्णनस्य शास्त्रेण सङ्गतिः (६२) - अध्यासवर्णनस्य सूत्रेण सङ्गतिः (६३) - बन्धस्यानध्यस्तत्वे दोषाः (६४) - आत्मैकत्वविद्याप्रतिपत्तिविषये शङ्का (६५) - आत्मैकत्वे शास्त्रप्रामाण्यम् (६६) - चिन्मात्रवस्तुसिद्धिः (६७) - आत्मैकत्वसिद्धिः (६८) - सर्ववेदान्तानामप्यात्मैकत्वपरत्वे शङ्का (६९) - उक्तशङ्कापरिहारः (७०) - अविद्यां प्रति विविध-शङ्कास्तत्परिहाराश्च (७१) - उपसंहारः (७२) ।

# सङ्केताक्षराणां विवरणम्

उपनिषदः तत्तन्नामप्रथमाक्षरेणैव सूचिताः

| | |
|---|---|
| उप.सा. | उपदेशसाहस्री (गद्यबन्धे) |
| ऐ.भा. | ऐतरेयोपनिषद्भाष्ये |
| गौ.का. | गौडपादीयकारिकासु |
| गी.भा. | गीताभाष्ये |
| तै.वा. | तैत्तिरीयोपनिषद्भाष्यवार्तिके |
| नै.सि. | नैष्कर्म्यसिद्धौ |
| न्या.सू. | न्यायसूत्रेषु |
| पा.सू. | पाणिनीयसूत्रेषु |
| बृ.वा. | बृहदारण्यकोपनिषद्भाष्यवार्तिके |
| ब्र.सू. | ब्रह्मसूत्रेषु |
| शा.भा. | शाबरभाष्ये |
| श्लो.वा. | श्लोकवार्तिके |
| सं.वा. | संबन्धवार्तिके |

ॐ

# सुगमा

## (श्रीशाङ्करीयाध्यासभाष्यव्याख्या)

सर्वात्मा सर्वदृग्योऽसौ सर्वाध्यासनिरासकृत् ।
सततं संनिधत्तां मे हृदये परमः शिवः ।।१।।

सूत्रभाष्यप्रणेतारौ वेदान्ताब्जप्रभाकरौ ।
वन्दे परस्परात्मानौ बादरायणशङ्करौ ।।२।।

भाष्यं यद्यपि पूर्णमेव बहुभिर्व्याख्यातपूर्वं बुधै-
रस्मिंस्तेऽपि तथापि मोहमगमन् यद्वादिवैमत्यतः ।
अध्यासैकनिरूपणेन निखिलं भाष्यार्थमातन्वती
स्वात्मानन्दविधायिनी च सुगमा व्याख्या न केषां मुदे ।।३।।

## १. अथाध्यासप्रतिज्ञाभाष्यम्

**युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमः-प्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायाम्, तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः । इत्यतोऽस्मत्प्रत्ययगोचरे विषयिणि**

**चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासस्तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तम् ॥ तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेन,अत्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य 'अहमिदम्', 'ममेदम्' - इति नैसर्गिकोऽयं लोकव्यवहारः ॥**

**१. विचारावतरणिका** - ओं नमो ब्रह्मविद्यासंप्रदायकर्तृभ्यो नमो महद्भ्यो नमो गुरुभ्यः । भगवान् बादरायणो वेदान्तमीमांसामारभमाणः 'ब्रह्मविदाप्नोति परम्' (तै. २-१-१), 'ब्रह्मविद्ब्रह्मैव भवति' (मुं. ३-२-९) - इत्यादिश्रुतिसमर्पितं निःश्रेयसप्रयोजनं ब्रह्मज्ञानं सपरिकरं निरूपयन् शास्त्रादौ सूत्रयामास - 'अथातो ब्रह्मजिज्ञासा' (ब्र.सू. १-१-१) इति । अस्यार्थः । अथ साधनचतुष्टयसम्पत्त्यनन्तरम्, अतः ब्रह्मज्ञानादेव परमपुरुषार्थप्राप्तिरिति श्रुतिसिद्धत्वात्, ब्रह्मणो वक्ष्यमाणलक्षणस्य जिज्ञासा कर्तव्या इति । अत्र ब्रह्मज्ञानार्थं विचारः करणीयः इत्युक्त्वा तज्ज्ञानमेव परमपुरुषार्थप्राप्तिं प्रति हेतुत्वेन सूचयन् सूत्रकारः स्वात्मभूतब्रह्मप्राप्तिरेव परमपुरुषार्थः, तत्प्राप्तिश्च मिथ्याज्ञानव्यवधाननिबर्हणद्वारा इत्यर्थात् सूचयति । न ह्यन्यज्ञानादन्यप्राप्तिरुपपद्यते । न च स्वरूपप्राप्तिर्नाम मिथ्या[illegible]

स्याध्यासकृतत्वं भगवान् भाष्यकारः सकलशास्त्रोपोद्धात-तयोपनिबध्नाति । "युष्मदस्मत्प्रत्ययगोचरयोः" इत्यादिना "अस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते" इत्यन्तेन ग्रन्थेन । अस्य च भाष्यग्रन्थस्य विभागशोऽर्थं यथामति प्रदर्शयिष्यामः ।।

२. **प्रतिज्ञाभाष्यविभागः** - तत्र **'तथापि'** इत्यारभ्य **'नैसर्गिकोऽयं लोकव्यवहारः'** इत्येतदन्तं भाष्यं तावदात्मानात्म-नोरितरेतराध्यासः स्वभावत एव लोके प्रवर्तमानो दृश्यत इति प्रतिजानीते । **'युष्मदस्मत्प्रत्ययगोचरयोः'** इत्यारभ्य **'मिथ्येति भवितुं युक्तम्'** इत्यन्तं तूक्ताध्यासो युक्त्या निरूप्यमाणो नोपपद्यत इति शङ्कासमुत्थापनार्थमिति विवेकः ।।

३. **अध्यासे शङ्का** - तत्र शङ्काग्रन्थस्यायमभिप्रायः - यदेतदुपवर्ण्यत आत्मानात्मनोरितरेतराध्यास एव निमित्तं लोक-व्यवहारस्येति, तन्नोपपद्यते । अध्यासो हि नाम भ्रान्त्या समारोपः । स च समानस्वभावयोरेव संभवति न तु **विरुद्धस्वभावयोः** । विरुद्धस्वभावौ चात्मानात्मानौ । अतो नान्योन्यसमारोपणार्हौ । कथं पुनस्तयोर्विरुद्धस्वभावतेति ? **युष्मदस्मत्प्रत्ययगोचरत्वात्, विषयविषयिभावाच्च** । तत्रात्मा तावदस्मत्प्रत्ययगोचरः । प्रतीयतेऽनेनास्मिन्निति वा प्रत्ययः । अहमिति प्रत्ययोऽस्मत्प्रत्ययः । सर्वो ह्यात्मानम् 'अहम्, अहम्' इति प्रत्येति । न चास्मत्प्रत्ययं विना

विषयित्वेनैवास्माकं ज्ञानपथमवतरति । न हि कश्चिदनात्मा जातुचिदात्मानमेनं स्वज्ञानेन विषयीकर्तुमुत्सहते । अनात्मनो ज्ञानस्यैवासंभवात् । अयं त्वात्मा सर्वमेव स्वज्ञानेन विषयीकरोति निर्विकल्पेन स्वरूपभूतेन, 'इदमहं जानामि' इति वा सविकल्पेन । सर्वदा चायं ज्ञाने स्वप्रधान एव प्रथते न तु गुणभूतः कस्यचित् । अतो विषयीत्युच्यते । आत्मातिरिक्तं तु सर्वमात्मचैतन्यस्य विषय एव । न हि भवति - अस्ति किंचिद्यज्ज्ञानस्य विषयो न भवतीति । तस्माद्विषयस्वभाव एवानात्मा । युष्मत्प्रत्ययगोचरश्चासौ । त्वमिति प्रत्ययो युष्मत्प्रत्ययः । आत्मा हि सर्वमप्यनात्मानं स्वज्ञानेन विषयीकृत्य 'त्वमेवंविधः, त्वमेवंविधः' इति ज्ञातुं शक्नोति । अतः सर्वोऽप्यनात्मा युष्मत्प्रत्यययोग्य इति युष्मत्प्रत्ययगोचर इत्युच्यते । न पुनरनात्मा सर्वदा त्वंकारविषय एव सन् ज्ञाने प्रथत इति कृत्वा । भवति हि प्रत्ययान्तरगोचरोऽप्यनात्मा यथा 'इमे विदेहाः' - इत्यादिस्थले । अपि चाहङ्कारप्रतियोगी त्वङ्कार एव नेदङ्कारादिः । 'अयमहमस्मि' इत्यादि समानाधिकरण-प्रयोगस्यापि दर्शनात् । न त्वेवं 'त्वमहम्' इति निरुपचरितं सामानाधिकरण्यं भवति । तस्मान्न कदाप्यस्मत्प्रत्ययविरुद्ध-युष्मत्प्रत्यययोग्यतां विजहात्यनात्मा । अतोऽसौ युष्मत्प्रत्ययगोचरः । तदेवं चिदात्मा विषयी, अस्मत्प्रत्ययगोचरश्च । अनात्मा तु विषयो युष्मत्प्रत्ययगोचरश्च । तस्मात्सूक्तं तयोर्विरुद्धस्वभावतेति ॥

विरुद्धस्वभावत्वे निदर्शनम् - **'तमःप्रकाशवत्'** इति तमश्च प्रकाशश्च तमःप्रकाशौ, ताविवेत्यर्थः । तमसो हि चक्षुर्वृत्तेर्निरोधकत्वं स्वभावः । प्रकाशस्य च तदनुग्राहकत्वम् । तदयमर्थः - यथा

चक्षुर्वृत्तिनिरोधनस्वभावस्य तमसस्तदनुग्राहकप्रकाशस्वभावत्वम्, तद्वैपरीत्येन प्रकाशस्य तमःस्वभावत्वं वा न शक्यशङ्कम्, एवमात्मानात्मनोरप्यन्योन्यस्वभावत्वं न शक्यशङ्कम् । विरुद्ध-स्वभावत्वात् । तदेवम् **'इतरेतरभावानुपपत्तिः'** । इतरस्य विषयस्य इतरभावानुपपत्तिः, विषयित्वानुपपत्तिः । इतरस्य च विषयिण इतरभावानुपपत्तिः, विषयत्वानुपपत्तिरिति ॥

तदेवं विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां **तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः** । तयोर्विषय-विषयिणोर्धर्माः, तद्धर्माः । तेषाम् इतरेतरभावानुपपत्तिः । इतरेषां विषयधर्माणाम् इतरभावानुपपत्तिः, विषयिधर्मत्वानुपपत्तिः । तथेतरेषां विषयिधर्माणाम् इतरभावानुपपत्तिः, विषयधर्मत्वानुप-पत्तिश्च । तस्यास्य धर्माणामितरेतरभावस्यानुपपत्तिः सुतरां सिद्धा भवति । ननु कथमनुपपत्तिः ? दृश्यते हि जपाकुसुमधर्मस्य लौहित्यस्य भावः स्फटिके कुसुमभिन्नेऽपि । सत्यम् । न तु तत्र स्फटिककुसुमयोर्धर्मिणोरत्यन्तं विरुद्धस्वभावता । तेन तद्धर्माणां परस्परत्र गतिः सर्वथा नासंभाविता । प्रत्युत स्वच्छद्रव्ये स्फटिके रक्तादिवर्णसंक्रान्तिः संभावितैव । इह पुनर्न केवलं भिन्नस्वभावयोः किं तर्ह्यत्यन्तविरुद्धस्वभावयोर्धर्मिणोः कथं धर्माणां परस्परत्र भावः शक्यते शङ्कितुमपि ? यत्र खलु धर्मिणोः परस्परसंभेदः संभावितः, यथा तन्तुपटयोः, तत्र तद्धर्माणामपि संभेद उपपद्येतापि यथा तन्तुधर्माणां पटे संक्रान्तिः । यत्र पुनर्धर्मिणौ परस्परमत्यन्तविरुद्धस्वभावौ तमः-प्रकाशवत्, तत्र सुतरां विप्रकृष्टास्तद्धर्मा इत्येव न्याय्यम् । धर्म्यधीना हि धर्माणां स्थितिरिति । अत्र च धर्मिणावात्मानात्मानौ परस्पर-

मत्यन्तविरुद्धस्वभावौ समधिगतौ । तस्मात्तद्धर्माणामपि स्वस्वधर्मिण्येव स्थितिर्युक्ता न तु स्वसामानाधिकरण्याक्षमे धर्म्यन्तरे संक्रान्तिः । तस्मात् साधूक्तं 'तद्धर्माणां सुतरामितरेतरभावानुपपत्ति'रिति ॥

किमतो यद्येवम् ? तत्राह - **इत्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः, तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तम् ।** इत्यतः वर्णितहेतोः, अध्यासो मिथ्येति भवितुं युक्तम् । अस्मत्प्रत्यययोग्ये हि विषयिण्यात्मनि चित्स्वरूपे तद्विरुद्धो युष्मत्प्रत्यययोग्यो विषयो जडस्वरूपो देहादिः, तद्धर्माश्च युष्मत्प्रत्ययगोचरस्य जडस्य धर्माः स्थूलत्वकृशत्वकाणत्वबधिरत्वमूकत्वादयोऽध्यस्यन्त इत्येतत् कथं युक्तं स्यात् ? प्रत्युत विरुद्धस्वभावत्वात् तेषामध्यासो मिथ्यैव, चित्स्वरूपे धर्मिणिजडस्वरूपस्य देहादेरध्यासो नास्त्येव देहादिधर्माणां चाध्यासो नास्त्येवेति भवितुं युक्तम् । किं च तद्विपर्ययेण विषयिणि विषयोऽध्यस्यते तद्धर्माश्चाध्यस्यन्त इति यत्, तद्वैपरीत्येन विषयिणस्तद्धर्माणां चाध्यासोऽपि मिथ्या सोऽप्यध्यासो नास्त्येव लोकव्यवहारे इति भवितुं युक्तम् । विषयी विषयेऽध्यस्यते विषयिधर्माश्च विषयेऽध्यस्यन्त इति यदुच्यते भवता तदपि न युक्तिमत् । विरुद्धस्वभावत्वादेव विषयविषयिणोरित्यर्थः ॥ अयमत्र सारः । यत्र धर्मिणोस्तादात्म्यसंभवस्तन्तुपटादाविव, यत्र वा केवलं तद्धर्माणां परस्परत्र संक्रान्तिसंभवः स्फटिकजपाकुसुमादाविव, तत्रैव धर्मिणोः परस्पराध्यासो धर्माणां वा परस्परत्राध्यासः संभवति नान्यत्र । यत्र पुनस्तयोर्धर्मिणोर्न सर्वथा तादात्म्यसंभवः, अत्यन्तविरुद्धस्वभावत्वात्तमःप्रकाशयोरिव, तत्र न

धर्म्यध्यासो न वा धर्माध्यासः । विरुध्येते चात्यन्तं स्वभावेनात्मानात्मनौ विषयित्वेन विषयत्वेन च प्रतीयमानौ, अतो न तयोरन्योन्याध्यासो न वा तद्धर्माणामन्योन्यस्मिन्नध्यासः संभवतीति ।।

अत्र तावदुक्तं भवत्यात्मानात्मनोरन्योन्याध्यासो मिथ्येति यावदुक्तं भवति संसारानर्थस्य नाध्यासिकत्वं किं तु वस्तुकृतत्वम्, आत्मानात्मनोः स्वरूपेण विज्ञायमानयोरपि तस्यास्यानर्थस्यानुवर्तनादिति । यदा चैवम्, तदा नास्ति केवलेनात्मज्ञानेन प्रयोजनम् । न हि वस्तुकृतं बन्धं ज्ञानमात्रं निवर्तयितुमलम् । अतो वृथैव ब्रह्मजिज्ञासोपन्यासप्रयास इति शङ्कितुराशयः ।।

**४. उत्थापितशङ्कापरिहारः** - अथ परिहारभाष्याभिप्रायो वर्ण्यते । स्यादेतदेवं यदि लोकव्यवहारो नाध्यासिको दृश्येत । दृश्यते तु सर्वत्र 'अहमिदम्' 'ममेदम्' इति **नैसर्गिकोऽयं व्यवहारः** । निसर्गाज्जायमानो नैसर्गिकः । निसर्गत एव ह्यविचारस्वभावात् सर्वोऽपि व्यवहरन् दृश्यते अहमिदमिति ममेदमिति च । न च दृष्टेऽनुपपन्नं नाम ।।

कथं पुनराध्यासिकोऽयं व्यवहार इति ? उच्यते । 'अहम्' इत्यस्मत्प्रत्ययगोचरस्यात्मनो व्यवहारः । 'इदम्' इति तु विषयांशस्य युष्मत्प्रत्ययगोचरस्य तत्संभिन्नस्य व्यवहारः । अतोऽयमाध्यासिकः । ननु न कोऽपि व्यवहरत्यहमिदमिति । तत्र किमिदमुच्यते नैसर्गिकोऽयं लोकव्यवहार इति ? बाढम् । तथापि तु व्यवहरत्येव सर्वो लोकः 'अहं मनुष्यः', 'अहं ब्राह्मणः', 'अहं ब्रह्मचारी' इत्यादिरीत्या । तस्यास्य व्यवहारस्य सामान्याकारप्रदर्शनम् 'अहमिदम्'

इति । अहमित्थंभूत इत्येव खलु प्रत्ययो व्यपदेशश्च लोकस्य, तत्र 'अहम्' इत्यस्मत्प्रत्ययगोचरमात्मानमुद्दिश्य 'इत्थंभूतः' इति यत् प्रत्येति व्यपदिशति च लोकः, सोऽध्यासनिबन्धन एव व्यवहार इति प्रतिजानीमहे । तथा हि । 'अहं मनुष्यः' इत्यत्रास्मत्प्रत्यय-गम्यश्चिदात्मा । तस्य नास्ति मनुष्यत्वम्, मनुष्यत्वस्य देहधर्मत्वात् । न च युष्मत्प्रत्यययोग्यस्य विषयभूतस्य देहस्य मुख्यवृत्त्या अस्म-त्प्रत्ययगोचरता संभवति । अथ च 'अहं मनुष्यः' इति निसर्गत एव सामानाधिकरण्येन प्रत्ययव्यपदेशौ भवन्तौ दृश्येते लोके । एवं 'ममेदम्' इति प्रत्ययव्यपदेशावपि व्याख्येयौ । प्रत्येति हि व्यपदिशति च लोको 'ममायं पुत्रः', 'ममेदं मित्रम्', 'ममेदं गृहम्' इत्येवम् । तत्र 'मम' इत्यस्मत्प्रत्ययगोचरस्यात्मनः संबन्धप्रत्ययव्यपदेशौ । न च तस्यात्मनः पुत्रादिसंबन्धः साक्षाद्वर्तते । अथ च तत्संबद्धत्वमात्मनः प्रत्येति व्यपदिशति च लोकः । पुत्रादिसंबन्धवतश्च देहस्य नास्ति मुख्यवृत्या अस्मत्प्रत्ययविषयतेति स्पष्टमेव । अथ च 'मम' इति निश्चितप्रत्ययव्यपदेशौ करोति लोकः ॥

स चायं प्रत्ययव्यपदेशरूपो व्यवहारो वर्णितदिशा **अन्योन्य-स्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य** प्रवर्तते । तस्मात् ——प्रत्ययगोचरयुष्मत्प्रत्ययगोचरयोरन्यस्मिन् अन्यात्मकताम् अध्यस्य - अस्मत्प्रत्ययगोचरे युष्मत्प्रत्ययगोचरताम्, विषयिणि विषयात्मकताम्, चिदात्मके जडात्मकताम्, तद्वैपरीत्येन युष्मत्प्रत्ययगोचरे अस्मत्प्रत्ययगोचरताम्, विषये विषयिताम्, जडात्मके चिदात्मकतां चाध्यस्यैव व्यवहरति लोकः । तथान्योन्यधर्मांश्चाध्यस्यैव व्यवहरति । अन्यस्मिन् हि विषयिणि

अन्यधर्मान् विषयधर्मान्, तद्वैपरीत्येन चान्यस्मिन् विषये अन्यस्य विषयिणो धर्मांश्चाध्यस्यैव व्यवहरतीति सिद्धम् ।।

तत्र किंनिमित्तं लोक एवमध्यस्य व्यवहरतीति ? उच्यते । **इतरेतराविवेकेनात्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः** । चिदात्मा तावदेको धर्मी, अनात्मा चापरः । तयोरितरेतराविवेको नाम इतरस्मादितरस्य यो विवेकः 'एवंस्वभावश्चिदात्मा, तद्विरुद्धस्वभावश्चानात्मा' इति विविच्य निर्धारणम्, तदभावः । तथा धर्मांश्च चिदात्मनः चैतन्यम्, कूटस्थत्वम्, विषयित्वम्, सत्यत्वम्, सुखदुःखसंस्पर्शविधुरत्वम्, निरंशत्वम् - इत्येवमादयः । अनात्मनस्तु जडत्वम्, विकारित्वम्, विषयत्वम्, मिथ्यात्वम्, सुखदुःखात्मकत्वम्, सांशत्वम् - इत्येवमादयः । अमीषां धर्माणामविवेकः 'अस्य धर्मिण इमे धर्माः' इति निर्धारणाभावः । सोऽयमविवेक अध्यासे निमित्तम् । तदुक्तं गीताभाष्ये - "क्षेत्र-क्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वभावयोरितरेतरतद्धर्माध्यासलक्षणः संयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनः, रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावादध्यारोपितसर्परजतादिसंयोगवत्" (गी.भा. १३-२६) इति । यद्यप्यात्मानात्मानावत्यन्तं विविक्तौ, परस्परविरुद्धस्वभावत्वात् । अत एव च तद्धर्मा अप्यत्यन्तं विविक्ता एव । तथापि तयोर्धर्मधर्मिणोर्विवेकेन निरूपणाभावनिमित्त एव वर्णिताध्यासः । ततश्च व्यवहार इत्यनवद्यम् । यद्यपि चैतन्यादयो नाम नात्मनः सकाशात् पृथग्विद्यन्ते धर्माः । नित्यनिर्विशेषचैतन्यस्वरूपत्वादात्मनः । न चानात्मनि द्रव्यगुणकर्मादिभेदेन धर्मधर्मिभावं वैशेषिकादिवद्-

भ्युपयन्ति वेदान्तिनः परमार्थतः । न चाप्यनात्मा नामात्मनोऽत्यन्तभिन्न एव । तत्त्वान्यत्वाभ्यामनिर्वचनीयस्वरूपत्वात् सलिलफेनवत् । तथापि चित्स्वरूपानेव चैतन्यादीन् उपाध्यपेक्षया तत्पृथग्भूतानिव प्रकल्प्य तेषां तद्धर्मत्वेन व्यपदेशः । व्यावहारिकं चानात्मानः प्रातीतिकसत्त्वं धर्मधर्मिभावं च यथाप्रसिद्धमेवाभ्युपगम्य जडत्वादीनां तद्धर्मत्वेन व्यपदेशश्चेति नात्र व्याघातशङ्कावकाशः ॥

"मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य व्यवहारः" इत्येतत्तु विस्पष्टकथनार्थम् । 'इतरेतराविवेकेन मिथ्याज्ञाननिमित्तः' इति 'अविवेकोत्थं यन्मिथ्याज्ञानं तन्निमित्तः' इत्यर्थः । गमकत्वात् समासः । अथवा अविवेकेनाध्यस्येति पूर्वेणैवान्वयः । अध्यास-मिथ्याज्ञानयोरैक्यादुभयथापि यथोक्त एवाभिप्रायः । अविवेकोत्थं मिथ्याज्ञानम् इत्युक्त्या अविवेकमिथ्याज्ञानयोरुपादानोपादेयभावो नोपेयः, किं तर्ह्यात्मैव सत्यं वस्तु नान्यदतोऽस्तीति ज्ञाना-भावादज्ञातात्मैवानात्मरूपेण प्रतिभासत इति निमित्तनैमित्तिक-भावोऽवसेयः । यथोक्तं **वार्तिककारैः** - "सर्पादयो यथा रज्ज्वा विकाराः स्युरबोधतः । अज्ञानादात्मनस्तद्वत्तेजोऽबन्नादिविक्रिया ॥ न हि वेदान्तसिद्धान्ते ह्यज्ञातात्मातिरेकतः । साङ्ख्यानामिव सिद्धान्ते लभ्यते कारणान्तरम्" ॥ (बृ.वा. ४-४-१७८, १७९) इति । यदि ह्ययं लोको विविच्यात्मानमनात्मानं च स्वरूपतो निर्धारणं कुर्यात्, तत एवं विरुद्धस्वभावयोरितरेतरत्वम् इतरेतरधर्मवत्त्वं चारोप्य न व्यवहरेत् । विवेकाभावात्तु तयोः स्वभावमजानन् मिथ्यैवातत्स्वभावं समारोपयन् सत्यस्वरूपे चिदात्मन्यनृतस्य देहादेर्जन्ममरणजराव्याध्यादि-धर्मानध्यस्य, तद्वैपरीत्येन चैतन्यादींश्च विषयिधर्मान् देहादिष्वध्यस्य

व्यवहरन् संसारानर्थमनुभवतीति न चित्रम् । अतो मिथ्याज्ञाननिमित्त एवायं व्यवहारः ।।

यत्तूक्तम् - चिदात्मस्वभावो विरुणद्धि जडस्वभावम्, तत्कथंचन परस्परतादात्म्यं परस्परत्र धर्मसंक्रमणं वा न संभवतीति, तत्तथैवास्तु । यत्पुनस्तत एव हेतोरध्यासो नास्तीति भवितुं युक्तमिति । तत्तर्कमात्रमिति नाद्रियते, दृष्टविरोधात् । न हि न दृश्यतेऽध्यासः । न च मिथ्याज्ञानस्य युक्त्यनुसरणं स्वभावः, 'येन युक्तिविहीनत्वान्नास्त्यध्यास इत्यपि स्यात् । तथाचोक्तं **नैष्कर्म्यसिद्धौ** - "सेयं भ्रान्तिर्निरालम्बा सर्वन्यायविरोधिनी । सहते न विचारं सा तमो यद्वद्दिवाकरम्" ।। (नै.सि. ३-६६) इति । तस्मान्मिथ्याज्ञानमध्यासापरपर्यायं यथा-वर्णितमस्तीति तन्निमित्तश्च लोकव्यवहार इति च त्वयाप्यङ्गी-करणीयं दृष्टमनुसरतेति भावः ।।

अपि च **सत्यानृते मिथुनीकृत्यायं व्यवहारः** । यद्रूपेण निश्चितं सद्यत् तद्रूपं न व्यभिचरति तत्सत्यम् । यत्तु यद्रूपेण निश्चितं तद्रूपं व्यभिचरति तदनृतमित्यभियुक्ताः । तथा च चिदात्मा स्वरूपाव्यभिचारात् सत्यः । अनृतश्चानात्मा । स्वरूपव्यभिचारात् । यद्यप्यात्मा अस्मत्प्रत्ययगोचरत्वं व्यभिचरति सुषुप्त्यादौ, अनात्मापि स्वं देहादिरूपं न व्यभिचरति यावद्व्यवहारम् । तथापि नास्मत्प्रत्ययगोचरत्वमात्मनो निश्चितं स्वरूपम् । चित्त्वं तु तस्य स्वं निश्चितं रूपम्, तच्च न व्यभिचरति सः - । एवं देहादिरपि केनचिन्निश्चितेन रूपेण न तिष्ठति सम्यङ्निरूप्यमाणः । सर्वो ह्यनात्मा न केनचिदेकेन रूपेणावस्थातुं शक्नोति, नित्यविकारित्वात् । येन-केनचिद्रूपेणावस्थितमिवात्मानं दर्शयन् तदात्व एव सम्यङ्निरूपणेन

तद्रूपं व्यभिचरतीत्यवगम्यते । स्वकारणव्यतिरेकेणानुपलब्धेः । अनात्मस्वरूपमात्रं चात्यन्तं व्यभिचरति सुषुप्त्यादाविति सुप्रसिद्धमेतत् । तदेवं सत्य आत्मा, अनृतश्चानात्मेत्यवसीयते । तयोश्च यन्मिथुनीकरणं बुद्धौ मिथःसंबन्धतापादनम्, तदेतन्मिथ्याज्ञानमध्यासशब्दव्यपदेश्यम् । अतश्च सिद्धं मिथ्याज्ञाननिमित्तो लोकव्यवहार इति । मिथ्याविषयकं हि ज्ञानं मिथ्येत्युच्यते । मिथ्या चात्र विषयविषयिणोर्मिथुनीभावः । अमिथुनस्य सतो मिथुनस्येव भावो हि मिथुनीभावो नाम । न च सत्यानृतयोर्मिथुनीकरणे वास्तविकं तादात्म्यं वास्तविकस्तद्धर्माणां परस्परत्र भावो वा अपेक्ष्यते । यथा हि रज्जुशुक्तिकादिषु सर्प-रजतादिसमारोपः संभवति तादात्म्यं वास्तवं धर्मसंक्रान्तिं च विनापि विवेकज्ञानाभावादेव केवलात्, एवं प्रकृतेऽप्यात्मानात्मनोर्मिथः-समारोपः संभवत्येव तद्विवेकज्ञानाभावादिति ज्ञेयम् ॥

अथ विवेक एव कस्मान्न भवति तथा च नाध्यास इत्यत्रोत्तरम् **नैसर्गिकोऽयं लोकव्यवहार** इति । यद्यपि नैसर्गिक इति व्यवहारविशेषणं लक्ष्यते भाष्ये, तथापि व्यवहारस्य नैसर्गिकत्वोक्त्या तत्कारणस्याध्यासस्यैवाविवेकनिमित्तस्य नैसर्गिकत्वमुक्तमिति ध्येयम् । इदमुक्तं भवति । निसर्गत एवायमविवेकस्तत्कृताध्यासश्च नात्र कारणमन्वेष्टव्यम् । न ह्यस्ति कारणमविवेकेऽत्यन्तं विविक्तयोः । नाप्यध्यासेऽत्यन्तविरुद्धस्वभावयोः । अविचारस्वभाव एव त्वत्रा-पराध्यति । इत्थंस्वभावो हि लोको यदयमनुपपन्नमप्यत्मानात्मनो-रध्यासमविवेकेन कृत्वा व्यवहरत्यहमिदं ममेदमिति चेति ॥

तदेवं मिथ्याध्यासनिबन्धनत्वाल्लोकव्यवहारस्य, सिद्धमिदं न वस्तुसन् संसारः, अपि तु भ्रान्तिकृत एवेति । दृष्टं च मिथ्याज्ञानस्य

सम्यग्ज्ञानविनाश्यत्वम् । अतः संसारानर्थस्य मिथ्याज्ञानकृतस्य विनाशाय क्रियमाणोऽर्थवानेव ज्ञानोपदेशः । अतः सप्रयोजनोऽयं तत्त्वज्ञानार्थं जिज्ञासोपन्यास इत्यभिप्रायः ।।

**५. अविद्योपादानवादनिराकरणम्** - "मिथ्याज्ञाननिमित्तः" इत्येतद्भाष्यं केचिदन्यथा व्याचक्षते । कथम् ? मिथ्या च तदज्ञानं च मिथ्याज्ञानम् । मिथ्याज्ञानं निमित्तम् उपादानं यस्य सोऽयमध्यासो मिथ्याज्ञाननिमित्तः । अज्ञानं ज्ञानाभाव इति शङ्कानिरासार्थं किल मिथ्यापदम्, भावरूपत्वादज्ञानस्य । अज्ञानस्योपादानत्वेऽपि संस्कारकालकर्मादिरूपेण परिणतमेतदेवाध्यासनिमित्तं भवतीति द्योतयितुं किल निमित्तपदग्रहणम् । स्वेन तु रूपेणेदमज्ञानमुपादानमेवाध्यासस्येति । तदेतद्व्याख्यानं निष्प्रयोजनं भाष्याक्षरबाह्यं युक्तिबाह्यं चेति श्रेयस्कामैरुपेक्ष्यम् । सर्वस्यानात्मप्रपञ्चस्याध्यासिकत्वमुपवर्णयितुं भाष्यप्रवृत्तिरित्यतिरोहितम् । तदुपवर्णने च प्रयोजनं सकलसंसारस्य मिथ्यात्वसिद्धिर्ज्ञानबाध्यत्वसिद्धिश्चेति सर्वसंप्रतिपन्नमेतत् । तदत्र प्रकृतं सप्रयोजनं चाध्यासोपवर्णनं विहायाप्रकृतमप्रसिद्धमध्यासोपादानमज्ञानं मुधैव वर्ण्यत इति निष्प्रयोजनं तावद्व्याख्यानम् । ननु नाप्रकृतमज्ञानम्, ब्रह्मज्ञाननिबर्हणीयतया तस्यैव संसूत्रणात् प्रथमसूत्रे । नाप्यप्रसिद्धम् । 'अहमज्ञः' इत्यनुभवादेव तत्प्रसिद्धेः । अत एव न निष्प्रयोजनं तदुपवर्णनम् । अध्यासकारणनिरूपणार्थत्वात् । विदितकारणस्य ह्यध्यासस्य समूलघाते प्रयत्नः सफल इति । नैतदेवम् । लोकप्रसिद्धमज्ञानं मुक्त्वा त्वदभिमतमज्ञानं सूत्रकारेण सूचितमित्यत्र गमकाभावात् । न च 'अहमज्ञः' इत्यनुभवात् त्वदुक्ताज्ञानसिद्धिः । लोकप्रसिद्धाज्ञानविषयकत्वेनैव

यथोक्तानुभवस्योपक्षयात् । न हि 'अहमज्ञः' इत्यनुभवे त्वदुत्प्रेक्षितमज्ञानं प्रतियन्ति लौकिकाः परीक्षका वा । न चाध्यासकारणगवेषणं युक्तिमत् । अध्यासस्यानादित्वात् । यथा चैतत्तथाग्रे स्फुटयिष्यते । तस्मात् सुष्ठूक्तं त्वदभिमताज्ञानमप्रकृतमप्रसिद्धं निष्प्रयोजनं च तद्वर्णनमिति । भाष्याक्षरबाह्यं चैद्व्याख्यानम् । न हि भाष्ये क्वचिदप्यध्यासोपादानमज्ञानमिति वर्णितमुपलभ्यते । मिथ्याज्ञान-निमित्तो व्यवहार· इत्येव तु भाष्यम् । तत्र मिथ्याज्ञानं नामाध्यास एवेत्यवगम्यते । 'अध्यासो मिथ्याप्रत्ययरूपः', 'सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात्', 'मिथ्याप्रत्ययनिमित्तत्वात् सशरीरत्वस्य' (सू.भा. १-१-४), 'मिथ्याज्ञाननिमित्तः शारीरस्योपभोगः' (सू.भा. १-२-८), 'मिथ्याज्ञानकल्पित उपभोगः' (सू.भा. १-२-८), 'मिथ्याभि-मानभ्रमनिमित्त एव दुःखानुभवः' (सू.भा. १-२-८), 'यथार्थबुद्धिः पूर्वनिविष्टाया मिथ्याबुद्धेर्निवर्तिका भवति' (सू.भा. ३-३-९) - इत्यादिप्रयोगदर्शनात् । तथा च मिथ्याज्ञाननिमित्तो व्यवहार इत्यध्यासपूर्वकोऽयं व्यवहार इत्येव व्याख्याने स्वारस्येन संभवति, किमित्यक्षरबाह्यमेव मिथ्याभूताज्ञानोपादानक इति व्याख्यायत इति प्रष्टव्यो भवान् । युक्तिबाह्यं चैतद्व्याख्यानम् । कथम् ? अध्यासोपादानत्वेनाभिमतमज्ञानं किमाध्यासिकम् उत नेति वक्तव्यम् । तत्राध्यासिकत्वे कथं पूर्वसिद्धस्याध्यासस्य स्वकल्पिताज्ञानोपादानकत्वं सम्भवि ? अनाध्यासिकत्वे त्वात्मवत् तस्यापि सत्यत्वमेव प्राप्नोतीत्यनिष्टप्रसङ्गः । यच्चोक्तं काल-कर्मादिरध्यासनिमित्तत्वम् अज्ञानस्य च कालकर्मादिरूपेण परिणाम इति । न तत्र किंचिन्मानमुपलभामहे । किंच कालकर्मादीना-मध्यासनिमित्तत्वमभ्युपगच्छता तेषामाध्यासिकत्वमभ्युपगम्यते न वेति

वक्तव्यम् । यद्यभ्युपगम्यते कथमध्यासकल्पितानां तेषां तमेवाध्यासं प्रति निमित्तकारणत्वम् ? अथ नाभ्युपगम्यते, तेषामप्यात्मवत् सत्यत्वं प्राप्नोतीत्यनिष्टप्रसङ्गः । किं चान्यत् । मिथ्याभूतमज्ञानमध्यासोपादानकारणमिति कालकर्मादिलक्षणतन्निमित्तरूपेणापि परिणमत इति च ब्रुवता वक्तव्यम्, किं कार्यकारणभावो नाध्यासिकः, परिणामक्रिया वा नाध्यासिकीति । यद्युभयत्राप्याध्यासिकत्वाभ्युपगमः, ततोऽध्यासकृतस्य कथमध्यासहेतुत्वम् ? अथानभ्युपगमः, तर्हि संसारकारणमज्ञानमध्यासादिरूपेण सदैव परिणंस्यते कस्तस्य निवारकः स्यात् ? न ह्यनध्यस्तं ज्ञानेन शक्यनिवर्तनमिति वृथैव ज्ञानोपदेश इति पुनरप्यनिष्टप्रसङ्ग एव । अपि चाध्यासस्य कारणमविद्येति वदन्तस्तत एव काले तयोरविद्याध्यासयोः पूर्वापरीभावं प्रसञ्जयन्तः, पुनरप्यविद्या कालरूपेण परिणमत इति कालस्यापि कार्यतां स्वप्राक्कालापेक्षतां च ब्रुवन्तो भवन्तः कथं नापत्रपन्ते ? तदेवं निष्प्रयोजनं भाष्यबहिर्भूतं युक्तिविरुद्धं चेदं मिथ्याभूतभावाज्ञानवर्णनमित्यास्तां तावत् ॥

# २. अथाध्यासलक्षणभाष्यम्

**आह - कोऽयमध्यासो नामेति ? उच्यते । स्मृतिरूपः परत्र पूर्वदृष्टावभासः । तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति । केचित्तु यत्र यदध्यासस्तद्विवेकाग्रह-निबन्धनो भ्रम इति । अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षत इति । सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति । तथा च लोकेऽनुभवः - शुक्तिका हि रजतवदवभासते । एकश्चन्द्रः सद्वितीयवदिति ।।२।।**

६. **भाष्यसंबन्धः** - एवं तावदहं ममेति नैसर्गिकोऽयं लोकव्यवहारः इत्येतदन्तेन भाष्येणात्मानात्मनोस्तद्धर्माणां च परस्पराध्यासः सर्वानुभवसिद्ध इत्युक्तम्, प्रतिज्ञामात्रं तु तत् । अथ तामेव प्रतिज्ञामध्यासलक्षणनिरूपणसंभावनाभ्यामुपपाद्य व्यवहारस्य सर्वस्यैवाध्यासपूर्वकत्वं प्रदर्शयिष्यन् लक्षणनिरूपणं तावदारभते ।।

७. **अध्यासलक्षणं बुभुत्सोः प्रश्नः** - 'आह कोऽयमध्यासो नाम' इति लक्षणप्रश्नो लक्षणाक्षेपो वा । न ह्यध्यासो नामेदृश इत्यविज्ञाय 'आत्मानात्मनोरितरेतराध्यासः संभवति वा न वा, तत्संभवेऽपि लोकव्यवहारस्तत्पूर्वक एव दृश्यते न वा' इत्येतन्निर्णेतुं शक्यते । अतोऽध्यासलक्षणं तावदादौ कथनीयमिति प्रष्टुरभिप्रायः । अथवा कोऽयमध्यासो नाम ? नास्त्येवाध्यासो नाम कश्चित्, लक्षणाभावा-दित्याक्षेपः क्रियते । एवं हि तत्त्वनिर्णयार्थस्य शास्त्रस्य सुख-

प्रतिपत्त्यर्थं प्रष्टारमाक्षेप्तारं वा पुरतः स्थितमिव समुपकल्प्य प्रतिवचनं परिहारवचनं वा वर्णयन्ति तज्ज्ञाः ॥

८. **अध्यासलक्षणम्** - प्रत्याह सिद्धान्ती - **उच्यते स्मृतिरूपः परत्र पूर्वदृष्टावभासः** । परत्र वस्तुनि परस्य अतद्रूपस्य अवभासोऽध्यासः । इदं चाध्याससामान्यलक्षणम् । तत्रात्मानात्मनोरन्योन्याध्यासोऽनादिरिति वक्ष्यते । शुक्तिरजतादि-साद्यध्यासस्यापि लोकसिद्धस्य संग्रहार्थं तदुदाहरणेन प्रकृता-ध्यासस्वरूपनिर्धारणार्थं च विशेषणद्वयम् । 'स्मृतिरूपः' इति 'पूर्वदृष्टावभासः' इति च । स्मृते रूपमिव रूपमस्येति स्मृतिरूपः । इदमेव खलु स्मृते रूपं यत् पुरोऽनवस्थितविषयत्वम् । अध्यासे त्वयं विशेषो यत् पुरोऽनवस्थितविषयत्वेऽपि पुरोऽवस्थितविषयवदवभासः । पूर्वदृष्टमिव पूर्वदृष्टम् । तस्यावभासः । न हि पूर्वदृष्टमेव वस्तु पुरोऽवभासतेऽत्र यथा प्रत्यभिज्ञायाम्, पूर्वदृष्टसदृशं वस्तु पुरोऽवस्थितमिति तु केवलं भ्रान्त्या विकल्प्यते । एवं च स्मृताविव विषयसांनिध्याभावोऽथ चानुभूताविव वस्तुनः पुरोऽवस्थितत्वेनाव-भासनं चाध्यास इत्युक्तं भवति । परत्रेति तु तद्रूपरहितेऽपि तत्प्रतीति-रिति वक्तुमित्युक्तम् । तथा च 'परत्र परावभासः' इत्यनेन कुण्डे बदराणामिवाधाराधेयभावेन प्रतीतिर्नावगन्तव्या । यद्यपि तत्र परत्र कुण्डे परेषां बदराणामवभासो वर्तते, तथापि न स्मृतिरूपत्वमव-भासस्येति विशेषः । नापि परत्रेति पूर्वदृष्टभिन्नवस्तुमात्रकथनम् । तज्जातीयेऽपि परत्र वस्तुन्यवभासस्याध्यासत्वप्रसङ्गात् । तद्यथा पूर्वं भुजङ्गमेकं दृष्ट्वा पश्चादपरस्मिन् भुजङ्गे या भुजङ्गबुद्धिः , स नाध्यासः । तत्र हि भुजङ्गबुद्धेरनुभवरूपत्वमेव न स्मृतिरूपत्वम् ।

न हि तत्र भुजङ्गत्वशून्ये भुजङ्गबुद्धिः । अत एव पूर्वदृष्टे भुजङ्गे पुनरपि या भुजङ्गबुद्धिः, सोऽपि नाध्यासः । न हि तत्र बुद्धेः स्मृतिरूपत्वम्, किं तु प्रत्यभिज्ञारूपत्वम् । न च तत्राभुजङ्गभूते भुजङ्गबुद्धिः । भुजङ्गस्मृतिस्तु सर्वथा नाध्यासः । पुरोवस्थित-भुजङ्गावभासस्यैवाभावात् । यः पुनरसत्यपि भुजङ्गेऽभुजङ्गभूते रज्ज्वादौ भुजङ्गस्यावभासरूपः प्रत्ययः, सोऽध्यास एव तादृशप्रत्ययस्य स्मृतिरूपत्वात् परत्रपूर्वदृष्टावभासत्वाच्चेति सारः ।।

अध्यासः, अध्यारोपः, भ्रान्तिः, मिथ्याज्ञानम्, मिथ्याबुद्धिः मिथ्याप्रत्ययः, मिथ्याभिमानः, अन्यथाग्रहणम्, विपरीतज्ञानम् - इति पर्यायाः । एवं चाध्यासस्य भ्रान्तित्वेन लोकसिद्धत्वात्, भ्रान्तेश्चातथाभूते तथाज्ञानत्वेन सर्वसंमतत्वात्, इदमेव लक्षणं प्रकृताध्यासस्यापीति बोध्यम् । "स्मृतिरूपः पूर्वदृष्टावभासः" इति तु साद्यध्यासलक्षणस्पष्टीकरणार्थमेवेति न तस्याध्यासलक्षणशरीरे प्रवेश इति न प्रस्मर्तव्यम् ।।

**९. अध्यासे वादिविप्रतिपत्तयः** - तं केचिदित्यादिना मतभेदानां कथनं स्वाभिप्रायस्य सर्वतन्त्रसिद्धान्तत्वाविष्करणार्थम् ।

**तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति** । अधिकरणमन्यत्, धर्मस्त्वन्यस्य । तयोर्धर्मधर्मिणोः मिथः संबन्धाभावेऽपि संबन्ध-कल्पनमध्यास इति ते वदन्ति । यथा स्फटिके जपाकुसुमादि-लौहित्यस्य संबन्धकल्पनम् । स्फटिकस्य हि स्वच्छद्रव्यत्वात् तत्र संनिधिमात्रेण संक्रान्तं जपाकुसुमादिलौहित्यं स्फटिकधर्म इत्येव गृह्णन्ति केचिदविवेकिनः । तदेवमन्यधर्मस्यान्यस्मिन् कल्पनमध्यास इति तेषामभिप्रायः । अत्र धर्मग्रहणमुपलक्षणार्थम्

धर्मिणोऽपि । शुक्तिरजतादिकल्पनस्याप्यध्यासत्वेनेष्टत्वात् । अथवा अन्यस्मिन् अन्यस्य धर्मस्य अर्थान्तरस्य कल्पनम् - इत्येवं व्याख्येयं भाष्यम् ।। **केचित्तु यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रम इति** वदन्ति । यत्राध्यासो यस्य चाध्यासः, तयोर्द्वयोरपि ज्ञानमध्यासकाले वर्तते । ज्ञानद्वयमिदमिति विविच्याग्रहणात्तु तयोरेकत्वग्रहणाग्रहः । यथा दूरस्थयोर्द्वयोर्वनस्पत्योर्ज्ञातयोर्विवेकाग्रहणेन तयोरेकत्वग्रहणाभिमानः । यथा वा शुक्तिज्ञानमनुभवात्मकम् रजतज्ञानं च स्मरणात्मकम् - इत्युभे अपि ज्ञाने समीचीने एव । तथापि रजतज्ञाने स्मरणाभिमानभङ्गात् ज्ञानद्वयाविवेकाच्चैकमेवेदं रजतात्मकं वस्तु ज्ञातमिति बुद्धिः । तदेवं सर्वत्राध्यासे ज्ञानद्वयाविवेक एव न पुनरेकस्मिन्नपरस्या-तद्रूपस्य ज्ञानमस्तीति तेषामाशयः ।। **अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते** । अस्मिन् पक्षे त्वयं विशेषः । अन्यत्रान्यधर्मवादी विवेकाग्रहनिबन्धगभ्रमवादी च समारोपितवस्तुनः कुत्राचित् कथंचित् सत्त्वमङ्गीकुरुतः । परमार्थसतो हि कुसुमस्य लौहित्यं सांनिध्यवशात् स्फटिके संक्रामतीति प्रथमपक्षेऽभिमानः । शुक्तिरजतयोः परमार्थसतोरेव ग्रहणस्मरणे, स्मरणाभिमानभङ्गात्तु ग्रहणस्मरणयोरविवेकात् तत्रैकत्वकल्पनमिति द्वितीयपक्षेऽभि-मानः । अत्र तु पक्षे समारोपितस्य सत्त्वमेव नाभ्युपगम्यते । अधिष्ठानमेव तथा तथा भ्रान्त्या प्रतिभासत इति च कल्प्यत इति विशेषः । एष्वेव त्रिषु प्रकारेषु सर्वेषां दार्शनिकानां भ्रान्तिख्यातिवादा अन्तर्भवन्ति । तत्र शून्यवादी वेदान्ती च तृतीयपक्षमालम्बेते । तदितरे तु प्रथम-द्वितियपक्षयोरन्यतरमिति विवेकः । तयोः पक्षयोः समारोपितं वस्तु सर्वथा नास्तीति नानुमन्यते । अन्यथाग्रहणप्रकारे परं विवाद इति राशिद्वयकरणम् । शून्यवादब्रह्मवादयोरुभयोरपि चरमपक्षे समावेशेऽ-

प्यस्ति विशेषः । तत्र शून्यवादिनो वदन्ति - अध्यारोपितं यथा न सत् तथा यत्र तदध्यारोप्यते तदपि न सत् । कल्पितत्वाविशेषादिति । वेदान्तिनस्तु ब्रुवते - यद्यप्यध्यारोपितं सर्वं कल्पितमेव, तथापि सर्वकल्पनाक्षयेऽविकल्पितस्याविकल्पितत्वादेव परमार्थसत्त्वं सेत्स्यति । न च तस्यापि कल्पितत्वम् । असति सम्यग्ज्ञाने मिथ्याज्ञानस्यैवासंभवाद् यत्र क्वचिदकल्पितत्वस्यावश्याङ्गीकरणीयत्वात् । न च लोके दृष्टो निरवधिको बाध इति । तदेवं मतभेदे स्थिते समारोपितस्य मिथ्यात्वे तु नास्ति विप्रतिपत्तिरित्येतयोरुभयोरपि तृतीयपक्ष एव प्रवेशोऽनुमतः । उभयेऽपि हि यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामध्यासमाचक्षते । यत्र शुक्त्यादौ यदध्यासः, यस्य रजतादेरध्यासः, तस्यैवाधारभूतशुक्त्यादेः, विपरीतधर्मत्वकल्पनाम् स्वात्मनो विपरीतो यो धर्मो रजतादिस्वभावः तद्वत्त्वेन कल्पनां मिथ्याभूतस्यैव गृहीतिम् अध्यासमाचक्षत इत्यर्थः ॥

१०. **इदमध्यासलक्षणं सर्वतन्त्राविरुद्धम्** - ननु सन्तु वादिनां विप्रतिपत्तयः । प्रकृते किमायातम् ? **सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति** । यद्यपि वादिनः समारोपितप्रतिभासे निमित्तमन्यथान्यथा व्याचक्षते, यद्यपि चाधिष्ठानारोप्यस्वरूपविशेषे ते विप्रवदन्ते । तथाप्यन्यस्य अध्यारोपास्पदस्य अन्यधर्मावभासताम् अर्थान्तरत्वेन प्रतिभासताम्, अतस्मिंस्तत्प्रत्ययरूपताम् क्वचिदपि वादे न व्यभिचरत्यध्यासः । वादिनां विविधमतविवरणे तद्विवादविवरणे वा नादरः कृतः । फल्गुप्रयोजनत्वात् । सन्तु तेषामवान्तरविवादाः परःशतम् । —स्मिंस्तत्कल्पनमध्यास इत्यत्र तु न कोऽपि वादी विप्रतिपद्यते ।

अतः सर्वतन्त्राविरुद्धोऽयमस्मत्सिद्धान्त इत्यभिप्रायः । न हि स्फटिके लौहित्यसंक्रान्तिं ब्रुवाणो वादी वास्तविकमेव स्फटिक-लौहित्ययोर्धर्मधर्मिभावं मन्यते । नापि शुक्तौ रजतप्रतिभासं स्वीकुर्वाणो वास्तविकमेव शुक्ते रजतरूपतां मन्यते । यद्यपि केचित् सत्ख्यातिवादिनो दुराग्रहाविष्टाः शुक्तिकैव रजताकारेणाध्यासकाले परिणमत इति वदन्ति । अन्ये च रजतांशोऽप्यल्पीयान् शुक्तिकायां विद्यमान एव भ्रान्तिकाले प्रतिभासत इति । तथापि ते रजत-प्रतिभासव्यतिरिक्तां रजतसत्तां साधयितुं नैव पारयन्ति । रजताकारपरिणती रजतप्रतिभासो वा भ्रान्तिकालमात्रे शक्यदर्शन इति हि तेऽभ्युपगच्छन्ति । तस्माद्व्यवहारे सदातनसत्त्वमनुभवन्त्याः शुक्तिकायाः सकाशान्न्यूनमेव सत्त्वं रजतस्य, लौकिकपरमार्थ-रजतसत्त्वविलक्षणमिति तैरप्याश्रयणीयं भवति । तादृशप्रतीतिमात्र-सत्त्वं हि मिथ्यात्वमुच्यतेऽस्माभिरिति संज्ञामात्रे विवादः । तदेवं सत्यमिथ्यामिथुनीकरणमेवाध्यास इति लक्षणं सर्वतन्त्रसिद्धान्त इति सिद्धम् ॥

११. **लौकिकानुभवानुसारि चेदं लक्षणम्** - न केवलं सर्ववादिसंमतमिदमध्यासलक्षणम्, किं तु प्रतिपत्त्रनुभवानुसारि चेत्याह - **तथा च लोकेऽनुभवः । शुक्तिका हि रजतवदव-भासत इति** । अत्र शुक्तिका तावत् परमार्थवस्तु । तस्या च न रजतत्वमस्ति ; अथ च सा रजतवदवभासते पूर्वदृष्टरजतबुद्धि-संस्कारात् । तस्मादसति रजते यद्रजतवदवभासनं शुक्तेः सोऽध्यासो भ्रान्तिः । विदितशुक्तिकातत्त्वस्य विगलितरजतभ्रान्तेरनुभवोऽयम् 'शुक्तिका हि रजतवदवभासत' इति । भ्रांन्तिकाले तु 'रजतमिदम्'

इत्येव प्रत्यय इतीदमनुभवसिद्धम् । अत्रोदाहरणे यद्यपि शुक्तिकायां रजतं नास्ति तथापि स्थलान्तरे तद्वर्तत एव । तद्दर्शनकृतसंस्कार-वशाद्धि शुक्तावरजतरूपायामपि रजतबुद्धिरुदेति । तेन यत्र यत्र भ्रान्तिस्तत्र तत्र समारोपितेनान्यत्र कुत्रचित् वस्तुतः स्थितेन भाव्यमिति स्यात् कस्यचिन्मतिः । तामपाकर्तुं लोकानुभवान्तरोदा-हरणम् - **एकश्चन्द्रः सद्वितीयवदिति** । न हि द्वितीयचन्द्रः कुत्रचिदपि दृष्टपूर्वः । तथापि पूर्वदृष्ट इव, वास्तविकचन्द्रसदृश इव च व्योम्नि भासते तैमिरिकस्य । अतः सद्वितीयत्वं चन्द्रेऽसदप्यवभासत इति सोऽप्यध्यासः । तदेव हि द्वितीयचन्द्रस्या-सत्वं नाम यदतैमिरिकेण पुरुषेण कुत्राप्यशक्यदर्शनत्वम् । तस्मा-दधिष्ठाने तदन्यत्र वा यत् क्वचिदप्यदृष्टपूर्वं तस्यापि सम्भावित एवाध्यारोप इति सिद्धम् । तस्मादनुभवानुसार्यपीदमध्यासलक्षणमिति स्थितम् ॥

१२. **एकीयवर्णनमध्यासस्य** - अत्र केचिद्वर्णयन्ति । ज्ञानस्य विषयपक्षपातित्वात्, अरजतस्य च रजतवदवभासने शुक्तिरालम्बनं रजतं त्ववभासत इति वैपरीत्यापत्तेः, 'मिथ्यैव रजत-मभात्' इति व्यवहारानुसारेण मिथ्यारजतं लौकिकपरमार्थरजत-विलक्षणमभिनवमेव रजतज्ञानावलम्बनं तत्काले समुत्पद्यत इति कल्पनीयम् । न चोपादानं विना किंचित् समुत्पत्तुमलम् । अतो मिथ्यारजतोपादानभूतं भावरूपं किंचिन्मिथ्याभूतमेवाङ्गीकार्यम् । तदेवाज्ञानमित्युच्यतेऽस्माभिः । तच्चाज्ञानं शुक्तिरजतप्रतिभासस्थले शुक्त्यवच्छिन्नचैतन्याश्रितम् । इयं हि प्रत्यक्षप्रक्रिया संक्षेपतः । अन्तःकरणवृत्तिर्विषयदेशं गत्वा विषयाकारं भजते । तदा

तत्स्थचिदाभासेन विषयावरणमपाक्रियते । ततो विषयदेशस्थचैतन्यस्य प्रमातृचैतन्यस्य चाभेदाद्विषयप्रत्यक्षता समुपजायते । शुक्तिरजतादि-मिथ्यावस्तुप्रतिभासस्थले पुनः शुक्त्यवच्छिन्नचैतन्याश्रिताविद्या रजतरूपेण परिणमते । दोषप्रतिबन्धात्तु वृत्तिरत्र शुक्तिकादिविषयाकारं न भजते । यदा चात्र शुक्त्यवच्छिन्नचैतन्यस्थाविद्या रजताकारेण परिणमते तदैव मिथ्यावस्तुप्रतिभासार्थं साक्षिचैतन्यस्थाविद्या रजतज्ञानाकारेण परिणमते । तदेवं रजताकारस्य रजतज्ञानाकारस्य चाविद्यापरिणामत्वाद्रजततज्ज्ञानयोः शुक्तिज्ञानतिरस्कार्यत्वाच्च रजतं तज्ज्ञानं च मिथ्येत्युच्येते । असतः प्रतिभासानुपपत्तेः सतश्च बाधानुपपत्तेर्मिथ्यारजतं तज्ज्ञानं च सदसद्भ्यामनिर्वचनीये भवतः । तदेवं किल शुक्तिकारजतप्रतिभासस्थले मिथ्यारजतमनिर्वचनीय-मविद्यापरिणामेनोत्पद्यत इत्यवगम्यते । कथं पुनरधिष्ठानज्ञानं विना तादृशमिथ्याज्ञाननिवृत्तिः ? न हि शुक्त्यवच्छिन्नचैतन्यप्रकाशेन तत्रोत्पन्नरजतस्य निवृत्तावपि रजतज्ञानस्य निवृत्तिरुपपद्यते । तदधिष्ठानस्य साक्षिचैतन्यस्य प्रतिभासाभावादिति चेत् । अत्र वदन्ति । ज्ञानस्य विषयाधीनत्वात्, विषयस्य च रजतस्य निवृत्तत्वात्, रजतज्ञानस्य निवृत्तिरुपपद्यते । अथवा निवृत्तिर्द्विविधा । एका सर्वथापि निवृत्तिः । अपरा तु कारणे लयः । यत्र सर्वथा निवृत्तिः, तत्रैव तदधिष्ठानज्ञानापेक्षा । यत्र पुनः कारणे लय एव, न सर्वथा निवृत्तिः, तत्र तु नापेक्षतेऽधिष्ठानज्ञानम् । तद्यथा - सुषुप्तौ सर्व-पदार्थानां भवति कारणे लयः । तत्र भोगकारणस्य कर्मणोऽभाव एव हेतुर्लये नाधिष्ठानज्ञानम् । एवमत्रापि रजतज्ञानस्य नात्यन्तिकी निवृत्तिः, येनाधिष्ठानज्ञानमपेक्ष्येत । अपि तु कारणेऽज्ञाने लय एवेति कल्प्यते । यथा मुसलप्रहारेण घटस्य स्वकारणे लयस्तद्वत् ।

तथा च शुक्तिकाज्ञानेन रजतनिवृत्तिः । रजताभावेन च रजतज्ञान-निवृत्तिरित्युपपद्यते । प्रकारान्तरेणापि रजतज्ञाननिवृत्तिरुपपादयितुं शक्यते । कथम् ? शुक्तिज्ञानकाले हि शुक्त्यवच्छिन्नचैतन्यं शुक्ति-रूपान्तःकरणवृत्त्यवच्छिन्नचैतन्यं चाभिन्ने भवतः । स्वतो भेदा-भावाच्चैतन्यस्य, उपाधिभेदेनैव तद्भेदावभासात् । वृत्त्यवच्छिन्न-चैतन्यमेव तु साक्षिचैतन्यं नान्यत्, साक्षिचैतन्यस्यैव वृत्त्युपाधि-वशाद्वृत्त्यवच्छिन्नचैतन्यमिति व्यवहारात् । तथा च शुक्तिका-प्रत्यक्षस्थले साक्षिचैतन्यस्य शुक्त्यवच्छिन्नचैतन्यस्य चाभेदात्, तावदुक्तं भवति शुक्त्यवच्छिन्नं चैतन्यं प्रकाशत इति, यावदुक्तं भवति साक्षिचैतन्यं प्रकाशत इति । तदेवं शुक्तिकाज्ञानेनाधिष्ठानभूत साक्षिचैतन्यस्यापि प्रतिभासादुपपद्यते मिथ्याभूतरजतज्ञाननिवृत्ति रिति ॥ अन्योऽपि प्रकार उपवर्ण्यते यथैतदुपपद्यते । शुक्तिस्थेद माकारवृत्त्युपहितचैतन्यस्थाविद्या रजततज्ज्ञानाकारपरिणामं भजा इत्येव कल्प्यताम् । तत्र तदविद्यातमोऽशस्य रजतरूपेण सत्त्वांशस च तज्ज्ञानरूपेण परिणामोपपत्तेः । शुक्तिकाप्रत्यक्षस्थले च पूर्वमे वर्णितप्रकारेण शुक्तितदाकारवृत्त्युपहितचैतन्ययोरैक्यात् शुक्तिका ज्ञानेन रजतं तज्ज्ञानं च निवर्त्येते इति नानुपपन्नं किंचित् । तदे सर्वत्राध्यासे वृत्त्युपहितचैतन्यमेव भवत्यधिष्ठानम् । तज्ज्ञानादेव च सर्वत्राध्यरोपितं रजतादिकं तज्ज्ञानं च बाध्येते इति सर्वमनवद्यमिति ॥

**१३. उक्ताध्यासवर्णनस्यासांगत्यम्** - सर्वमेवैतद्वर्ण नमसंगतम् । 'तथा हि लोकेऽनुभवः' इति लोकसिद्धस शुक्तिरजताध्यासस्योदाहरणेन हि स्वोक्तस्याध्यासलक्षणस्यानुभवानु सारित्वं प्रदर्शयितुं भाष्यकारस्य प्रवृत्तिरिति तावन्नोपपादनमपेक्षते.

अनेन तु भाष्येण कथमपि न संगच्छत इदमेकदेशिभिः कृतमध्यास-वर्णनम् । अनुभवानारूढत्वात्, विप्रतिपत्तिस्थानत्वाच्च । न हि रजततज्ज्ञानोपादानभूतमज्ञानं केनचिदनुभूतम्, अभ्युपगतं वा सर्वैर्वादिभिः । न च केवलं परिभाषासिद्धस्य प्रसिद्धवद् दृष्टान्तार्थमुपादानं युज्यते । अपि च सर्वं जगदात्मन्यध्यस्तम्, आत्मचैतन्यं चैकमेवाद्वितीयमिति च प्रतिपादयितुं खलु दृष्टान्तप्रणयनम् 'शुक्तिका हि रजतवदवभासते' इति । तत्र कथमद्याप्यसिद्धं तदेव चैतन्यैक्यमङ्गीकृत्य शुक्तिकारजतो-दाहरणमिति प्रष्टव्या भवन्तः । 'चैतन्यमेकमेव तत्तदुपाधिव-शाद्भिन्नमिव प्रतिभासते महाकाश इव घटोदञ्चनाद्युपहितः । प्रमाणप्रमेयव्यवहारे च प्रमात्रवच्छिन्नं चैतन्यं वृत्त्यवच्छिन्नं चैतन्यं विषयावच्छिन्नं चैतन्यमिति च विभक्तं सत् तत्तत्प्रत्यक्षसमये चाभेदतां गच्छति' - इत्येवं वर्णनं किं चैतन्यैक्यं ज्ञानिप्रबोधाय आहोस्वित् तदज्ञानिप्रबोधाय इति वक्तव्यम् । उभयथापि व्यर्थप्रयास एषः । न हि प्रतिपाद्यं चैतन्यैक्यं विदितवतः प्रमाणादिनिरूपणेच्छा जायते । अविदितवतस्तु न कश्चिदर्थो वर्णनेन । प्रमात्रवच्छिन्नं चैतन्यम्, प्रमेयावच्छिन्नं चैतन्यम् - इत्यादिविभागस्य दुर्ज्ञानत्वात् तेन । न हि लोकेऽस्त्यनुभवः शुक्तिप्रत्यक्षवतः 'शुक्त्यवच्छिन्नं चैतन्यं मया ज्ञातम्' इति । न च वाच्यम् - एषा तावद्वस्तुस्थितिः, लोके तथा व्यवहारोऽस्तु मा वेति । वस्तुस्थितेरद्याप्यसाधितत्वात् । असिद्धस्य चाङ्गीकारे यस्यकस्यापि दर्शनस्य सूपपादत्वात् । तस्मादनुभवानारूढत्वाद्भावा-ज्ञानस्य सर्वथाप्यसङ्गतं तस्यारोपितरजतादिरूपेण परिणतिवर्णनं स्वोत्प्रेक्षितप्रक्रियया तन्निवृत्तिवर्णनं चेति । विप्रतिपत्तिस्थानं चेदं

वर्णनं वादिनाम् । न हि वेदान्तिभिरपि सर्वैरभ्युपगम्यते रजताद्युत्पत्तिरिति ॥

अत्राह - सर्वमेतदकाण्डताण्डवितम् । कुतः ? शुक्तिरजततज्ज्ञानयोर्निरूपणेनैवोक्ताज्ञानसिद्धेः । तथा हि शुक्तिरजतं तावत् ख्यातेर्नासत् बाधाच्च न सदिति लौकिकैः परीक्षकैश्च सर्वैस्तस्यानिर्वचनीयत्वमभ्युपगन्तव्यम् । अत एव तज्ज्ञानस्यापि तत्त्वमभ्युपगन्तव्यम् । अनिर्वचनीयविषयकज्ञानस्य निर्वचनीयत्वायोगात् । एतयोश्च रजततज्ज्ञानयोः कादाचित्कत्वात् कार्यत्वमिति तत्कारणं मृग्यम् । न चानिर्वचनीयस्योपादानं निर्वचनीयं संभवतीति कार्यानुरूपमनिर्वचनीयमेवोपादानमप्येष्टव्यम् । तच्च नान्यदज्ञानादनादेः समस्ति । न च भ्रान्तिसंशयौ तथाविधं कारणं भवितुमर्हतः । तयोः सादित्वेन कार्यान्तरोपादानत्वासंभवात् । न ह्यननुगतं कार्याणां कारणं नाम । अन्यथा मृदादिवत् मृत्पिण्डादीनामपि घटादिकारणत्वप्रसक्तेः । न च भ्रान्तिसंतानस्य भ्रान्तितत्संस्कारसंतानस्य वा बीजाङ्कुरवत् कार्यकारणत्वसंभव इति शङ्क्यम् । भ्रान्तिसंस्काराणां कार्यत्वे सिद्धे तेषामन्योन्योपादानत्वस्वीकारस्यान्याय्यत्वात्, भ्रान्तिसंस्कारसन्तानाभ्युपगमेऽप्यनवस्थादौस्थ्याच्च । अतो यत्तेष्वागमापायिष्वनुगतं तदेव तेषामुपादानम् । तच्चाज्ञानमित्यकामेनापि स्वीकर्तव्यं भवति । ननु ज्ञानाभावव्यतिरेकेण तादृशाज्ञानं न प्रसिद्धम् । मैवं वोचः । 'नाज्ञासिषं शुक्तिम्, इदानीं तु जानामि । अज्ञानं निवृत्तम्' इत्यज्ञानतन्निवृत्त्योः सुप्रसिद्धत्वात् । न चायं ज्ञानाभावः । अपरोक्षत्वात् । आत्मनोऽभावप्रमाणाप्रमेयत्वात्तदाश्रिताज्ञानस्याप्यभावप्रमाणप्रमेयत्वायोगाच्च । ज्ञानाभाव एव चेदज्ञानम्, तर्हि कतमोऽयमभाव इति

विवेक्तव्यं भवति । न तावदन्योन्याभावः, तस्य विषयेऽप्याश्रितत्वादात्मैकत्वाश्रिताज्ञानत्वानुपपत्तेः । न प्रध्वंसः, तस्योत्पत्तिमत्त्वात् अज्ञानस्य च तदप्रतीतेः । नापि प्रागभावः, ज्ञानाभावत्वात्, अभावान्तरवत् । तस्याज्ञानत्वेनाप्रतीयमानत्वाच्च । ज्ञानप्रागभाव एवाज्ञानम्, ज्ञानभावे तन्निवृत्तिरिति चेत् । न । अतत्प्रागभावस्यापि ज्ञानभावे निवृत्त्युपपत्तेः, प्रदीपभावेनेव तमसः । तस्माच्छुक्तिरजततज्ज्ञानयोर्निरूपणादेवाभावविलक्षणानिर्वचनीयाज्ञानसिद्धेरकाण्डताण्डवितमेवेदमज्ञानवादानां विकल्पनं-तन्निरसनं चेति ।।

अत्रोच्यते - अभित्तिचित्रमेतद्वर्णितम् । शुक्तिरजतोत्पत्तेरेव तावदसिद्धेः । न हि शुंक्तिरजतमुत्पन्नम्, ततो ज्ञातं मया, तदनु शुक्तिज्ञानाद्विनष्टं चेति मन्यते कश्चिदपि लोके । रजतवत्प्रतीतिस्तु भ्रान्तिकाले सार्वजनीना । तथा च वक्ष्यति भगवान् भाष्यकारः - "शुक्तिकां रजतं प्रत्येतीत्यत्र शुक्तिवचन एव शुक्तिकाशब्दः । रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः । प्रत्येत्येव हि केवलं रजतमिति, न तु तत्र रजतमस्ति" (सू.भा. ४-१-५) इति । नन्वस्य प्रतीतेः कार्यत्वात् कारणापेक्षा, ततश्चाज्ञानसिद्धिरित्यध्यवसितम् । नायं साधुरध्यवसायः । अन्तःकरणेन्द्रियदोषनिमित्तादेव शुक्तिज्ञानाभावे प्रतीत्युपपत्तेः । ननु कार्यस्य निमित्तवदुपादानस्याप्यपेक्षणाप्यस्तीत्यज्ञानकाङ्क्षा स्यात् । न स्यात् । भ्रान्तित्वादेव प्रतीत्युपपत्तेः । लोकसिद्धसत्यवस्तुवत् सर्वविधकारणापेक्षत्वे तत एव सत्यत्वापत्तेः । ननु भ्रान्तिज्ञानस्याप्यस्ति कारणापेक्षा, कादाचित्कत्वात् । अतः सिध्यति तदुपादानमज्ञानम् । भ्रान्तिसंस्कारज्ञानाभावानां हि नास्ति कारणतेत्युपपादितम् । परिशेषादज्ञानमेष्टव्यं भवति तदुपादानकारणत्वेन । एवं शुक्तिरूप्यमपि

भवता भ्रान्तिविषयत्वेन स्वीकरणीयमेव । विषयमन्तरा तस्य ज्ञानत्वासंभवात् । न चैवं 'न तु तत्र रजतमस्ति' इति भाष्यविरोधः । लौकिकपरमार्थरजतनिषेधपरत्वादुदाहृतवचनस्येति चेत् । भ्रान्तोऽसि । न हि भ्रान्तेर्ज्ञानत्वसिद्ध्यर्थं विषयोऽङ्गीकार्य इति निर्बन्धनीया वयम् । "स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इत्युक्तविधया विषयासन्निधानेऽपि विषयावभासनमेव भ्रान्तिरित्यभ्युपगमात् । भ्रान्तित्वमेव हि तस्या हीयेत यदि भ्रान्तेरपि विषयानुकारित्वमङ्गीक्रियेत । न च भाष्यकारेण कुत्रापि प्रातिभासिकोत्पत्तिरङ्गीकृता दृश्यते, येनोक्तवचने लौकिकपरमार्थरजतविषयत्वं निषेधस्य वर्ण्येत । प्रत्युत प्रातिभासिकस्योत्पत्तेः प्रत्याख्यानामेव दरीदृश्यते भाष्ये प्रत्यक्षतः । "न हि रज्ज्वां भ्रान्तिबुद्ध्या कल्पितः सर्पो विद्यमानः सन् विवेकतो निवृत्तः" (मा.का.भा. १-१३) "न हि मनोविकल्पनाया रज्जुसर्पलक्षणाया रज्ज्वां प्रलय उत्पत्तिर्वा" (मां.का.भा. २-३२) इत्यादिस्थलेषु । एवं वार्तिकेऽपि - "रज्जुसर्पो यथा लोकेऽज्ञातरज्जुसतत्त्वकः । नोत्क्रामति न चाप्यास्ते न च नश्यति रज्जुतः ॥" (बृ. ४-४-२८९) इत्यादि । तस्मान्न भ्रान्तिविषयसमर्पकत्वेनाज्ञानसिद्धिः । नापि भ्रान्त्युपादानत्वेन तत्सिद्धिः । लोकसिद्धेष्वन्तःकरणादिषु सत्सु तद्व्यतिरेकेण त्वदुक्ताज्ञानोत्प्रेक्षणे हेत्वभावात् । नापि भ्रान्तिसंस्कारज्ञानाभावानां कारणत्वनिराकरणेऽपि परिशेषादज्ञानसिद्धिः । न हि त्वदिष्टमज्ञानं तेष्वागमापायिष्वनुगतमिति केनाप्यनुभूतम् । न च वयमज्ञानं भ्रान्तेरुपादानमित्युररीकुर्मः येन ज्ञानाभावस्य भ्रान्त्युपादानत्वनिराकरणं स्थाने स्यात् । यदुक्तं 'नाज्ञासिषं शुक्तिम्, इदानीं तु जानामि' इत्यनुभवबलाद्भ्रान्तितत्संस्कारसंशयज्ञानाभावेभ्यो व्यति-

रिक्तमज्ञानं सिध्यतीति । तदसत् । ज्ञानाभावविषयकत्वेनैव चारितार्थ्यात् तादृशानुभवस्य । ननु नायं ज्ञानाभावः, अभाव-प्रमाणेनानवगमादित्युक्तम् । सत्यमुक्तम्, दुरुक्तं तु तत् । न हि ज्ञानं प्रमाणगम्यम् । येन तदभावोऽपि प्रमाणगम्यः स्यादिति शङ्कयेत । येनैव त्वनुभवेन गम्यते ज्ञानम्, तेनैव ज्ञानाभावस्याप्यवगमान्न कस्यापि कुचोद्यस्यात्र संभवोऽस्ति । तर्हि कतमोऽयं ज्ञानाभाव इति चेत् ।। प्रागभाव एवास्तु । ननु तस्याप्यज्ञानत्वेनाप्रतीयमानत्वाद-ज्ञानत्वानुपपत्तिः ज्ञानेन निवृत्त्यनुपपत्तिश्च ज्ञानाभावत्वाद-भावान्तरवत् इत्युक्तम् । बाढमुक्तम्, अयुक्तं तु तत् । न हि ज्ञानाभावव्यतिरिक्तमज्ञानमद्यापि सिद्धम्, येनाज्ञानत्वेनाप्रतीयमान-त्वादिति वाचो युक्तिः शोभेत । न च दृष्टे ज्ञाननिवर्त्यत्वेऽनुपपत्तिः शक्या चोदयितुम् । न च 'अज्ञानं मे निवृत्तम्' इत्यनेनानुभवेन ज्ञानोदयव्यतिरेकेणाज्ञाननिवृत्तिरन्या कल्पयितुं शक्यते । तस्मात् "शुक्तिका हि रजतवदवभासते" इत्यत्र विपरीतग्रहणमात्रम् । "शुक्त्यज्ञानं निवृत्तम्" इत्यत्र च शुक्तिज्ञानोदयमात्रं परामृश्यत इत्यभ्युपगन्तव्यम् लोकप्रसिद्धिमनुसरता । यथोक्तं **भाष्यकारैः** 'यथा गृह्यमाणाया अपि शुक्तिकाया विपर्ययेण रजताभासाया अग्रहणं, विपरीतज्ञान-व्यवधानमात्रम्, तथा ग्रहणं ज्ञानमात्रमेव, विपरीतज्ञानव्यवधाना-पोहार्थत्वाज्ज्ञानस्य" (बृ.भा. १-४-७) इति । **वार्तिककारैश्च** "न चाविद्यासमुच्छित्तिर्ज्ञानोत्पत्यतिरेकतः" (बृ.वा. २-४-१९५) इति । एतेन तमोनिवृत्तिदृष्टान्तबलात् प्रागभावव्यतिरिक्तस्यापि निवृत्तिरस्तित्यज्ञानावष्टम्भोऽपि प्रत्याख्यातः । तमसः प्रकाशाभाव-विलक्षणत्वे वादिविप्रतिपत्तेः, प्रकाशस्यात्मलाभव्यतिरेकेण तमोनिवृत्तेरनुपलम्भाच्च । तस्मात् 'नाज्ञासिषं शुक्तिम्, अज्ञानं मे

निवृत्तम्' इत्यनुभवमात्रेण न विपरीतज्ञानाभावविलक्षणस्य कस्यचिदप्यज्ञानस्य सिद्धिरिति स्थितम् । तदेवं लोक-सिद्धाज्ञानविलक्षणस्य भावरूपाज्ञानस्य सर्वथाप्यसिद्धेरभित्ति-चित्रमेव तत्कार्यत्वेन भ्रान्तितद्विषययोर्वर्णनमिति न कुत्राप्यकाण्ड-ताण्डवितमस्माकम् ।।

अपि च 'शुक्तिका हि रजतवदवभासते' इति विदित-शुक्तिकातत्त्वस्य विगलितरजतभ्रान्तेरनुभवोऽयमित्युक्तम् । तच्च स्मर्तुमर्हसि । अवश्यं च त्वयाप्येवमेवाभ्युपगन्तव्यम् । भ्रान्तपुरुषस्य हि नानुभवः स्यात् शुक्तिका हीति । तस्य शुक्तिकाप्रतीतेरेवाभावात् । न वा रजतवदिति । 'रजतमेव भासते' इति खलु तस्य भ्रान्तिः । तथा च विगलितरजतभ्रान्तेरपि रजतप्रतीतिः कदाचिदनुवर्तत एव, दूरादिदोषात् । तत्र सत्यत्वबुद्धिस्तु शुक्तिकाबुद्ध्या निवर्त्यत इत्यन्यदेतत् । एवं स्थिते रजतप्रतीतेरज्ञानमुपादानमिति नैव सिध्यति । यत्कारणं शुक्तिज्ञानेन बाधिताज्ञानस्यापि रजत-प्रतीतिर्दृष्टा । तस्माद्भ्रान्तेरज्ञानमुपादानं भवतु मा वा, प्रतीतेस्ताव-न्नास्त्यज्ञानापेक्षेति सिद्धम् ।' अभ्युपगम्यैवमुच्यते । वस्तुतस्तु भ्रान्तेरपि रजतसत्यत्वबुद्धिमात्रत्वादधिष्ठानभूतशुक्तिबुद्ध्यैव निवृत्ति-रिति नान्तःकरणाद्यतिरिक्तमप्रसिद्धमज्ञानमुपादानत्वेन कल्प्यं भवतीत्यलं प्रपञ्चेन ।।

तस्मादनिर्वचनीयमनाद्यज्ञानं तत्तद्भ्रान्तौ लौकिकरजतादि-विलक्षणमिथ्यारजताद्यनिर्वचनीयविषयरूपेण तत्तज्ज्ञानरूपेण च परिणतं तत्तदधिष्ठानभूतशुक्त्यादिज्ञानाद्विनाश्यत इत्येत्सर्वं वन्ध्यापुत्रस्य जननवृद्धिराज्याभिषेकसुखदुःखानुभवमरणादिवदत्यन्तासम्भावितं

कल्पितं धृष्टैर्वादिभिः । नैषा प्रक्रिया लोकसिद्धभ्रान्तिनिदर्शनार्थं प्रवृत्तस्य भाष्यकारस्य हृदयमारूढेत्यलं कुदृष्टिपरीक्षणेन ।।

१४. **लक्षणविचारोपसंहारः** - इदमत्र प्रकृतम् । सर्वानुभवसिद्धदृष्टान्तद्वयग्रहणेन 'अतस्मिंस्तद्बुद्धिरेवाध्यास' इति लक्षणं न केवलं परीक्षकाणां संमतम्, किं तु लोकानुभवानुसारि चेत्यादर्शितम् । तदयमभिप्रायः । यथा हि लोके शुक्तौ रजताध्यासः, एकस्मिन्नेव चन्द्रे सद्वितीयताध्यासश्च, एवमेव विषयिणि चिदात्मके सत्यरूपे विषयस्यानृतस्य तद्धर्माणां चाध्यासः, तद्विपर्ययेण विषये विषयितद्धर्माणां चेति ।।

## ३. अथाध्याससंभावनाभाष्यम्

**कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम् ? सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति । युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि ।।**

**उच्यते । न तावदयमेकान्तेनाविषयः । अस्मत्प्रत्ययविषयत्वात्, अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः । न चायमस्ति नियमः पुरोऽवस्थित एव विषये विषयान्तरमध्यसितव्यमिति । अप्रत्यक्षेऽपि**

**ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति । एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः ।।**

१५. **भाष्यसंबन्धः** - आत्मानात्मनोरितरेतराध्यासकृतो लोकव्यवहार इति प्रतिज्ञातम् । अध्यासस्य च लक्षणमुक्तम् "स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इति । तच्च लक्षणं सर्वतन्त्राविरुद्धं लोकानुभवसंवादि चेति प्रतिपादितम् । तत्राध्याससामान्यलक्षणमङ्गीकृत्य तद्विशेषे स्वाक्षेपं प्रदर्शयितुमाह पूर्वपक्षी **कथं पुनरित्यादिना ।।**

१६. **आत्मा नाध्यासार्हः, अविषयत्वादित्याक्षेपः** - अयमभिप्रायः । अस्तु वादिनामविप्रतिपत्तिरध्याससामान्यलक्षणे । अस्तु च लोकेऽनुभवः शुक्तिरजतादिविषयको यत्संवादेन लक्षणं निर्दुष्टं भवति । तथापि प्रकृते तावदध्यासविशेषे न संभावनास्माकम् । कुतः ? विरुद्धस्वभावत्वादात्मानात्मनोः । शुक्तिरजतादिस्थले हि विषयस्य कस्यचित् विषयान्तरे कस्मिंश्चिदध्यासो भवति । तथा विषयस्यैव कस्यचिद्धर्मा विषयान्तर एव कस्मिंश्चिदध्यस्यन्त इति दृष्टम्, अत्र पुनर्विषविषयिणोर्विरुद्धस्वभावयोरपि परस्पराध्यासः परस्परधर्माध्यासश्चेत्युच्यते भवता । अतः पृच्छामः - **कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम् ?** इति । यत्तावदुक्तं प्रतिज्ञाभाष्ये नैसर्गिकोऽयम् 'अहमिदम्', 'ममेदम्' इति च लोकव्यवहारः - इति । तन्मृष्यामहे, तथा लोके दृष्टत्वात् । यत्पुनरुक्तम् - 'अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्यायं व्यवहारः' इति, तन्न मृष्यामः । तादृशाध्यासस्यादृष्टत्वात् । असंभवाच्च । न ह्यात्मानात्मानौ विविक्ततया न गह्येते । प्रत्यक्पराक्त्वेन विषयि-

विषयत्वेन च सदा सुविविक्तत्वात् । अध्यासो हि विवेकाग्रह-निबन्धनः सर्वत्र । आत्मानात्मानौ तु सुविविक्ताविति कथं तयोः परस्पराध्यासः संभवीति ? कथं पुनस्तौ सुविविक्ताविति ? उच्यते । अनात्मा तावत् पराङ्, बहिरेव परिदृश्यमानत्वात् । विषयश्चासौ, युष्मत्प्रत्ययगोचरत्वात् । आत्मा तु तत्प्रतीपत्वेन स्थितः प्रत्यङ् सर्वान्तरत्वात् । अविषयश्चायम् । विषयित्वेनैव भवता स्वीकारात् । तदेवंरूपे प्रत्यगात्मन्यविषयेऽनात्मनो विषयस्य तद्धर्माणां चाध्यासः कथं संभवेत् ? **सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति ।** यत्रयत्राध्यासस्तत्रतत्राधिष्ठानस्य पुरोऽवस्थितत्वं विषयत्वं चेत्युभयं दृष्टम् । यथा शुक्तिकोदाहरणे, तत्र हि शुक्तिका पुरोऽवस्थिता विषय-भूता च सती रजताध्यासेऽधिष्ठानं भवति । एवं चन्द्रोदाहरणेऽपि पुरोऽवस्थितस्यैव विषयस्य चन्द्रस्य सद्वितीयत्वाध्यासाधिष्ठानत्वम् । न तु तथात्मनि पुरोऽवस्थितत्वं विषयत्वं वा दृष्टमिति व्यापकविरुद्धोपलब्धिः । तस्मान्नास्ति प्रत्यगात्मन्यविषये विषयतद्धर्माणामध्यासः संभावितः । अत्राविषयस्यापुरोवस्थितस्यात्मन-स्तद्धर्माणां वा कथमध्यासोऽनात्मनीत्यप्याक्षेपो द्रष्टव्यः । न ह्यविषयस्य सर्वथा परोक्षस्वभावस्य वाध्यासः संभवति । विषय-स्यैव तु प्रत्यक्षार्हस्याध्यासः सर्वत्र दृश्यते । तस्मान्नास्त्यात्मनोऽ-नात्मन्यध्यासः, न च तद्धर्माध्यासस्तत्रेति भावः ॥

**१७. आत्मनोऽविषयत्वं कुतः ?** नन्वविषयत्वमेवात्मन इति कथम् ? तत्राह - **"युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽ-विषयत्वं ब्रवीषि"** इति । युष्मत्प्रत्ययादपेतः, तदगोचर आत्मा । तस्य च पराग्भूतेभ्यो विषयेभ्यः प्रतीपत्वेनात्मानमञ्चतो जानतः प्रत्यग्भूतस्य

प्रत्यग्भूतत्वे हेतुमाह - 'आत्मनः' इति, सर्वस्य हि विषयस्यत्मासौ। आत्मा च सन् कथं पराग्भावेनेदन्ताबुद्धिसमुल्लेख्यतां व्रजेत्? तदभावे च का नामविषयतास्येति भावः। तदेवं युष्मत्प्रत्ययागोचरत्वात् प्रत्यगात्मनोऽविषयत्वं ब्रवीषि त्वं सिद्धान्ती। तथा च विषयभावाभावात् अपुरोऽवस्थितत्वाच्च प्रत्यगात्मनो नाध्यासकर्मता तदधिष्ठानता वा सम्भवतीत्यर्थः॥

एतदुक्तं भवति। आत्मानात्मानौ प्रत्यक्पराक्त्वेन विषयविषयित्वेन चात्यन्तविरुद्धस्वभावत्वात् सुविविक्ताविति भवतोऽपि संमतम्। अत एव तु तौ परस्पराध्यासानर्हाविति वयं ब्रूमः। तस्मादहंममेति व्यवहारे न कंचिदध्यासं पश्यामः। तथा च यदादौ प्रतिज्ञातमस्माभिः संसारानर्थस्य नाध्यासिकत्वम् वस्तुकृतत्वादिति, तत् तथैव स्थितम्। तस्मान्नास्ति केवलेनात्मज्ञानेन वेदान्तविहितेनात्र प्रयोजनमिति तदर्थं ब्रह्मजिज्ञासोपन्यासप्रयासो मुधैवेति॥

## १८. आत्मानोऽस्मत्प्रत्ययविषयत्वादध्यासार्हतेति

**सिद्धान्तः -** अत्र समाधानम् यत्तावदुक्तमविषयत्वादात्मनोऽध्यासो न संभवतीति। अत्रोच्यते **न तावदयमेकान्तेनाविषयः अस्मत्प्रत्ययविषयत्वात्।** तावदिति क्रमे। अभ्युपगम्यैव भवदुक्तं नियमं प्रथमं समाधानमुच्यते। ततः परमसमाधानं वक्ष्याम इति भावः। अयमात्मा नैकान्तेनाविषयः। नाविषयत्वमेक एवान्तोऽत्र, किं तु विषयत्वमप्यपरोऽन्तो विद्यते। तस्मादेकान्तेन नियमेन नायमविषय इत्यर्थः। यदि हि नियमेन विषयत्वाभावमात्मनो वयमातिष्ठेमहि ब्जयेमापि तदध्यासविरोधम्। न त्वातिष्ठामहे। ननु युष्मत्प्रत्ययापेत

आत्मेति भवतां मतम् । बाढम् । तथाप्यविरोधः । कथमेतत् ? अस्मत्प्रत्ययविषयत्वादात्मनः । तद्विषयत्वं च भवतोऽपि संमतम् । अतो नियमेनाविषयत्वाभावात् संभवत्यध्यासः । ननु प्रत्यगात्मा सदा विषय्येवेत्युक्तं भवद्भिरेव । सत्यमुक्तम् । न तूक्तपूर्वमस्माभिरात्मा कदापि व्यवहारे विषयतां नापाद्यत इति । यद्यप्ययमात्मा स्वभावतो विषयी, तथाप्यस्मत्प्रत्ययविषयत्वमापादित एव व्यवहारगोचरो भवति नान्यथा । तेनोच्यते नायमेकान्तेनाविषय इति । अहंप्रत्ययविषय आत्मनि देहतद्धर्माणामध्यासस्तद्विपर्ययेणाहंप्रत्ययविषयात्मतद्धर्माणां च देहेऽध्यासो न भवतोऽप्यसंमतः । ननु मम नित्यमहंप्रत्ययविषय एवात्मा, भवत्सिद्धान्ते तु सदा विषय्येव सन्विषयोऽपीति वैषम्यम् । न । त्वयापि ज्ञातृत्वेन विषयित्वाभ्युपगमात् । अयं त्वत्र विशेषः । अत्यन्तविरुद्धं युगपदेकस्य निरंशस्य चात्मनो विषयविषयित्वं स्वीक्रियते भवता । अस्माभिस्तु विषयित्वमेव स्वाभाविकमात्मन इतीति । तथा हि । यत्र यो दृश्यते धर्मस्तस्यैव स इति युक्तम्, दृष्टानुसारित्वात् । अन्तःकरणस्थ एवेयमहंप्रत्ययविषयता दृश्यते । अतोऽन्तःकरणस्यैवायं धर्मो भवितुमर्हति, न तु द्रष्टुरात्मनः । न ह्यात्मैवाऽऽत्मधर्मं द्रष्टुमर्हति । एकस्यैव कर्तृकर्मत्वविरोधात् । न चात्मनो ज्ञात्रंशः पश्यतीति युक्तिमत् । अनंशत्वादात्मनः । यथोक्तं **नैष्कर्म्यसिद्धौ** - "नात्मना न तदंशेन गुणः स्वस्थोऽवगम्यते । अभिन्नत्वात् समत्वाच्च निरंशत्वादकर्मतः ।।" (नै. सि. २-२६) इति । तस्मादहं प्रत्ययाश्रयत्वं तद्विषयत्वं चात्मन इत्यत्यन्तमेव दृष्टविरुद्धम् ।।

कश्चात्र भवतोऽभिप्राय इति वक्तव्यम् ; अध्यासोऽ-

विषयत्वमात्मनो नैव सहत इति, आहोस्वित् तस्य विषयत्वमनापाद्य न संभवतीति ? यद्यविषयत्वं न सहत एवेति, तर्हि प्रष्टव्यो भवान् किमध्यासः स्वकालमतीत्याप्यधिष्ठानारोप्ययोः स्वरूपं नियन्तुं क्षमत इति । नो चेदध्यासकाले विषयत्वमपेक्ष्यत इति द्वितीयपक्ष एवाश्रयणीयः । तत्तु विद्यत एव प्रत्यगात्मनोऽपि । प्रत्यगात्मनो विषयत्वमापाद्यैव ह्यध्यासः । अतो नास्ति कश्चिद्विरोधः ॥

**१९. आत्मनो विषयित्वं स्वभावतः, विषयत्वं त्वध्यासात् -** अत्राह - कस्तर्हि प्रत्यागात्मानात्मनोर्भेदः, येनानात्मैव विषय इत्युच्यते, आत्मा तु विषयीति ? उच्यते - प्रत्यगात्मा तावत् स्वभावतो विषयी, चिदात्मकत्वात् । विषयत्वं तु तस्याध्यासिकम्, अध्याससमकालनिर्वर्त्यमध्यासनिर्वाहार्थम् । अनात्मा पुनर्युष्मत्प्रत्ययविषय एव स्वभावतः । स चाध्यासकाले क्वचिद्यद्यपि विषयित्वेन प्रतिभासते, तथापि न तत्स्वरूपं तस्य । न हि तदापि तस्य विषयत्वस्वरूपं हीयते यथाऽऽत्मनो विषयित्वस्वरूपम् । किं च यदाप्यात्मा विषयत्वमापाद्यतेऽध्यासनिर्वाहार्थम्, तदाप्यस्मत्प्रत्ययगोचर एव भवति न तु युष्मत्प्रत्ययगोचर इत्यस्ति सुमहद्वैषम्यम् । तमिमं भेदमाश्रित्योच्यतेऽस्माभिः - अनात्मैव विषयः, आत्मा तु विषयीति । अतो न दोषः ॥

**२०. अस्मत्प्रत्ययविषयत्वाध्यासयोर्नान्योन्याश्रयता -** नन्वेवमस्मत्प्रत्ययविषयतां विना नाध्यास इत्युक्तं भवति । तद्विषय[illegible]प्यध्यासकार्यमेवेति परस्पराश्रयः स्यात् । अस्मत्प्रत्ययविषयता-
[illegible]सः, तमेव चाध्यासमाश्रित्यास्मत्प्रत्ययविषयतेति । नेति
[illegible]ध्याससमकालमेवोभयनिर्वृत्तेः । मायानिर्मित[illegible]

युगपदेवोभयोरपि प्रतिभाससंभवात् । यदा खल्वध्यासः, तदाऽऽत्मन्यध्यासविषयता अनात्माध्याससंबन्धश्चेत्युभयमपि समकालमेव निर्वर्त्यत इत्यनुभवानुसारेण कल्प्यते न पूर्वापरीभावोऽपि कश्चित् । यत्पुनर्विषयत्वमनापाद्य नात्मन्यध्यास इत्युक्तम्, तत्र प्रतिपत्तिक्रममेवाश्रित्य तथोक्तम्, न तु कालकृतक्रममपीति न दोषः । न चास्मत्प्रत्ययविषयतास्वरूपमेवास्तु प्रत्यगात्मनः किमनेन कल्पनेनेति साम्प्रतम् । अनन्वयात् । न हि यावदात्मभावमस्मत्प्रत्ययस्यान्वयोऽस्ति । यथोक्तं **नैष्कर्म्यसिद्धौ** - "आत्मनश्चेदहं धर्मो यायान्मुक्तिसुषुप्तयोः । यतो नान्वेति तेनायमन्यदीयो भवेदहम् ।।" (नै. सि. २-३२) इति ।।

एतावदत्रोक्तम् - अभ्युपगम्यापि सर्वत्र विषये विषयान्तरमेवाध्यस्यत इति भवदुक्तं नियमं नात्र विरोधं पश्यामः । आत्मा हि विषयोऽपि भवति, न त्वविषय एवाध्यासकालेऽपीति ।।

**२१. आत्मनः प्रसिद्धिरेवालमध्यासनिर्वाहाय** - अध्यासेसंभावनायुक्त्यन्तरमाह - **"अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः"** इति । अयमभिसन्धिः - अधिष्ठानस्यारोप्यस्य वा विषयत्वं न व्यसनितया रोचयते भवानपि । किं तु विषयत्वमन्तरेण कस्यचिदपि वस्तुनोऽप्रसिद्धेः प्रसिद्धिमन्तरेण चाध्यासनिर्वाहाभावात् तदर्थं विषयत्वं तयोरपेक्ष्यत इत्यभिप्रायो भवतः । तत्र प्रसिद्धिरेव कीदृशी समभीष्टेति वक्तव्यम् । यदि विविक्तप्रत्ययविषयतया सर्वलोकप्रसिद्धिः, न तर्हि देहात्माध्यासेऽपि सा विद्यते । न ह्ययं देहः, अयं चाऽऽत्मा - इति विविक्तप्रत्ययविषयतया प्रसिद्धिरस्ति लोके । अथ च भवति तयोरध्यास इति सर्वसंप्रतिपन्नमेतदन्यत्र वेदबाह्यबौद्धचार्वाकादेः । अतो न

विविक्तप्रत्ययविषयता नियतं समपेक्ष्यतेऽध्यास इत्यवश्यमङ्गीः कर्तव्यं भवतापि । अथ कथंचित् प्रसिद्धिरभिप्रेता, विद्यत एव सा प्रकृतेऽपीति किं विषयत्वपर्यन्तानुधावनेन ? ननु प्रमाणैः सिद्धिः प्रसिद्धिः । सा हि प्रकर्षेण सिद्धिर्वस्तुनः । प्रकर्षत्वं च सिद्धेः संशयविपर्ययासंबन्धेन यथार्थरूपेतैवेति कथं सर्वप्रमाणागोचरस्य प्रसिद्धिः ? देहात्माध्यासे तु प्रसिद्धिरस्त्यस्त्याऽऽत्मनोऽहंप्रत्यय-विषयतया । तव त्वहंप्रत्ययविषयतामप्यपह्नुवानस्य कथं प्रसिद्धि-रात्मन इति चेत् । न तर्हि प्रमाणानां प्रसिद्धिः । न हि प्रमाण-विषयकाणि प्रमाणान्तराणि सन्ति यैरमीषां प्रसिद्धिः स्यादिति । स्यादेतत् - प्रमाणव्यतिरिक्तविषयक एवायं प्रसिद्धाप्रसिद्धव्यवहारः । न हि स्वयमप्रसिद्धानि प्रमाणानि विषयप्रसिद्धिं संपादयितुमलमिति । न तर्हि प्रमाणैः प्रसिध्यन्नेवार्थः प्रसिद्धौ भवति । अन्यथापि प्रसिद्धेर्भवतैवानुज्ञानात् । किं चातः ? अथ इदमायातं यदात्मनोऽपि प्रमाणैर्विना प्रसिद्धौ न कोऽपि दोषातङ्क इति । न हि कस्यचिदात्मा भवति परोक्षः । अव्यवहितत्वात् । न हि स्वरूपमेव स्वस्य केनचिद्व्यवहितं शक्यं कल्पयितुम् । आत्मा च स्वरूपमिति न केनचिद्व्यवहितः । अत एव च न प्रमाणैः सिद्धिस्तस्यापेक्षिता । व्यवहितप्रमेयविषयत्वात् प्रमाणानाम् । तदेवमपरोक्षत्वादेव प्रत्यगात्मप्रसिद्धिरिति न प्रसिद्ध्यर्थं तस्य विषयत्वमपेक्षितम् । प्रसिद्धिश्चेदध्यासे पुष्कलं कारणं तर्ह्यपरोक्षत्वात् प्रसिद्धेः, संभवत्ये-वात्मन्यनात्माध्यासः, अनात्मनि चात्माध्यासः । प्रसिद्धेरेवेति ।।

**२२. अधिष्ठानस्य पुरोऽवस्थितत्वमपि न नियमेना-पेक्ष्यतेऽध्यासे -** अथ यदुक्तं पुरोऽवस्थित एव सर्वोऽध्यस्यति ।

न चायमात्मा पुरोऽवस्थितः । प्रत्यक्स्वभावत्वात् । प्रत्यक्षसिद्धे वादिविप्रतिपत्त्यसंभवाच्च । दृश्यते हि वादिनां विप्रतिपत्तिरेवमात्मा नैवमात्मेति । तस्मान्नायमात्मा पुरोऽवस्थितः । अपुरोऽवस्थितस्य च कथमप्यध्यासाधिष्ठानत्वं न संभवतीति । अत्रोच्यते - **न चायमस्ति नियमः पुरोऽवास्थित एव विषये विषयान्तरमध्यसितव्य-मिति** । विषये विषयान्तरमध्यसितव्यमिति नियमः प्रत्युक्त एवाध-स्तात् । पुरोऽवस्थित एवाध्यसितव्यमिति त्वधुना प्रत्युच्यते । न चायमस्ति नियमः । कस्मात् ? **अप्रत्यक्षेऽपि ह्याकाशे बालास्तल-मलिनताद्यध्यस्यन्ति** । न खल्वाकाशः प्रत्यक्षः, शब्दाधारत्वेनानु-मेयत्वाभ्युपगमात् । तस्याकाशस्याप्रत्यक्षत्वेन प्रतिवादिसंमतस्याप्यधि-ष्ठानत्वं दृष्टमध्यासे । तस्मिन् हि बाला अविवेकिनोऽध्यस्यन्ति तलम्, तन्मलिनतादि च । तदेवं प्रसिद्धिमात्रमपेक्षतेऽध्यासः, न पुनः पुरोऽवस्थितत्वम् प्रमाणसिद्धित्वं वा नियमेन काङ्क्षते । उपलक्षण-मेतत् । अध्यस्तस्य प्रतीतेः स्वरूपतो निवृत्तिमपि न नियतमपेक्षत इति द्रष्टव्यम् । नास्ति तलमालिन्याद्याकाश एवायमिति बाधदशायामपि तलमालिन्याद्याभासानुवृत्तेरिति ॥

**२३. संभावनाग्रन्थस्योपसंहारः - एवमविरुद्धः प्रत्य-गात्मन्यप्यनात्माध्यास** इति प्रकृताक्षेपसमाधानग्रन्थोपसंहारः । तदेवं स्वतोऽविषयस्यापि प्रत्यगात्मनः कथंचिदस्मत्प्रत्ययविषयत्वसंभवात्, विषयत्वाभावेऽप्यपरोक्षत्वादेव स्वयंप्रसिद्धत्वात्, अधिष्ठानस्यारोप्यस्य वा विषयत्वस्य पुरोऽवस्थितत्वस्य वा नियमेनानपेक्षणात्, नासम्भावितः प्रतीच्यप्यात्मन्यनात्मनोऽध्यास इत्यर्थः । अत्रानात्मनः - इति

तद्धर्माणामप्यध्यासः संगृहीतो वेदितव्यः । उपलक्षणं चैतत् अनात्मन्यात्मतद्धर्माणामप्यध्यासोऽविरुद्ध इत्यपि द्रष्टव्यम् 'अविरुद्धः' इत्यनेनेदं सूचितम् - संभावनार्थमेवेदमाक्षेपपरिहरण मस्माभिः कृतम् । न त्वयमाक्षेपो युक्तः, दृष्टत्वाल्लोकेऽध्यासपूर्वकस्य व्यवहारस्य । न च दृष्टेऽनुपपन्नं नामेति ॥

---

# ४. अथ विद्याविद्याविवेकभाष्यम्

**तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते । तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः । तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाणुमात्रेणापि स न संबध्यते ।।**

**२४. आत्मानात्माध्यास एवाविद्या** - ननु शास्त्रकारेण तावत् "अथातो ब्रह्मजिज्ञासा" इति ब्रह्मज्ञानाय विचारः कर्तव्यतयोपन्यस्तः । शास्त्रस्य चास्य वेदान्तमीमांसारूपत्वात्, वेदान्तेषु च "ब्रह्मविदप्नोति परम्" (तै. २-१), "तरति शोकमात्मवित्" (छां. ७-१-३) - इत्यादिषु ब्रह्मविद्याया एव पुरुषार्थहेतुत्वकथनात् । सैव ब्रह्मविद्या प्रदर्शयितव्या भाष्यकारेणापि । तदत्र प्रसक्तं विद्याप्रतिपादनं विहाय किमिदमप्रसक्तम् अध्यसस्य लक्षणसंभावनादिनिरूपणमिति चेत् । नैष दोषः । अध्यासनिरूपणस्यैव प्रसक्ततरत्वात् । कथम् ? ब्रह्मविद्यायाः पुरुषार्थहेतुत्वं तदैव हि संगच्छते यदा अविद्यामात्रव्यवहितः पुरुषार्थः । सा चाविद्या भाष्योपवर्णिताध्यासमात्रशरीरा । यदि पुनर्वास्तव एव कश्चिद्बन्धो नाम, तद्धेतुभूता वाऽविद्या यथावर्णिताध्यासव्यतिरिक्ता, ततो नैव प्रत्याशा विद्यामात्रेण बन्धनाशस्य । न हि वस्तुकृतं बन्धं विद्या नाशयितुमलम् । अविद्यामात्रविनाशनसमर्थत्वात् तस्याः । तस्मात्प्रसक्ततरमेवेदमविद्याया ब्रह्मविद्यानिबर्हणीयत्वोपपादनार्थमध्यासमात्रशरीरत्वेनोपवर्णनम् ।।

तदेतदाह - **तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति**

**मन्यन्त** इति । तम् नैसर्गिकोऽयं लोकव्यवहार इत्यन्तेन ग्रन्थेन प्रतिज्ञातम्, एतम् अतस्मिंस्तद्बुद्धित्वेन प्रदर्शितसामान्यलक्षणम्, शङ्कापरिहारपुरस्सरं च कृतसंभावनम्, अध्यासं पण्डिता ज्ञानिनो वेदान्ताभियुक्ता अविद्येति मन्यन्ते । "अविद्यायामन्तरे वर्तमाना" (मुं. १-२-८) इत्यादिषु वेदान्तेषु परामृष्टा या अविद्या सैवात्राध्यासत्वेन व्याख्यातास्माभिः न तु क्वचिदपि वेदान्तनयेऽस्मादध्यासाद्विलक्षणा काचिदन्याऽविद्या ब्रह्मविद्याविनाश्याऽभ्युगताऽस्तीति भावः ॥

**२५. अध्यासेऽविद्याशब्दप्रवृत्तिनिमित्तम् । तत्रैकीय-मतोपन्यासः** - कस्मात्पुनरेतमध्यासमविद्येति मन्यन्ते पण्डिता ? अविद्याकार्यत्वादिति केचित् । का पुनरसावविद्या नाम ? इयमेव या चिन्मात्राश्रयविषया जडात्मिका अविद्याशक्तिः । सा हि जडवस्तुरूपेणोपवर्णिताध्यासरूपेण च परिणमते । अत एव हि सा कारणाविद्या, मूलाविद्या - इत्यादिभिर्नामभिरुपचर्यते । अथ भाष्यकारेण किमिति तां त्यक्त्वा कार्याविद्याभिधानीयकोऽध्यास एव वर्णित इति चेत् । मूलाविद्यायाः सुषुप्तादावनर्थकारित्वादर्शनात् कार्या-विद्यारूपेण परिणतैव सानर्थकारिणीति ज्ञापनार्थमिति ब्रूमः । वक्ष्यति हि "अस्यानर्थहेतोः प्रहाणाय" इत्यादि । अतोऽध्यासोऽविद्या-कार्यत्वादविद्येति ॥

**२६. उक्तमतनिराकरणम्** - तदसत् । कारणाविद्याया अप्रकृतत्वात् । तस्याः परिणामस्य च प्रत्याख्याततत्वात् । यत्तूच्यते - अध्यासरूपाविद्याया अनर्थकारित्वमिति, तदङ्गीक्रियते । भाष्यकारेण तथा वक्ष्यमाणत्वात् । यत्पुनः कारणाविद्या सुषुप्तौ सत्यपि

नानर्थकरिणीत्यतो भाष्यकारेण नात्र वर्णितेति । तन्न क्षम्यते । एतादृश्याः कारणाविद्यायाः कुत्रापि भाष्ये स्वीकाराभावात् । ननु "प्राज्ञः कारण बद्धस्तु" (मां. का. १-११) इति कारिकायां **श्रीगौडपादैः** कारणाविद्या निर्दिष्टा । **तद्भाष्ये** च "तत्त्वाग्रहणान्यथाग्रहणाभ्यां बीजफलभावाभ्यां तौ यथोक्तौ विश्वतैजसौ बद्धौ संग्रहीताविष्येते । प्राज्ञस्तु बीजभावेनैव बद्धः" इति । तत्कथमुच्यते कारणाविद्यायाः कुत्रापि भाष्यें स्वीकाराभाव इति ? नैष दोषः । "अग्रहणम्" इति भाष्योक्तस्य त्वदभ्यूहिंताध्यासोपादानार्थकत्वे मानाभावात् । तत्रैव च **कारिकायां** "द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः" (मां. का. १-१३) इत्यग्रहणशब्दस्य ग्रहणाभावे प्रयुक्तत्वात् । "अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः । विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते" ॥ (मां. का. १-१५) इति चाज्ञानस्य विपर्यासमात्रत्वेन वर्णनाच्च । **भाष्येऽ**पि "तत्त्वाप्रतिबोधमात्रमेव हि बीजं प्राज्ञत्वे निमित्तम्" (का. भा. १-११) इति कारणबन्धस्याप्रतिबोधस्य निमित्तमात्रत्वेनोपवर्णनादध्यासोपादानाविद्याया नैवात्रावकाश इति स्फुटत्वात् । तस्मात् सम्यगेवोक्तं कारणाविद्या भाष्ये क्वचिदपि न स्वीकृतेति । युक्तिविरुद्धश्चायं सुषुप्तौ कारणाविद्याङ्गीकारवादः । सुषुप्तावपि तत्सत्वेऽनात्मनः कार्यकारणान्यतररूपेणाविच्छिन्नसत्ता-लाभप्रसङ्गादात्मानात्मनोः सत्यानृतयोर्मिथुनीकरणमेवाध्यास इति सिद्धान्तः कदर्थितः स्यात् । प्रतिक्षिप्तश्चायं कारणाविद्यावादो विस्तरेण शङ्करहृदयापरनामके **मूलाविद्यानिरासनिबन्धे** इत्युप-रम्यते । तस्मादविद्याकार्यत्वादध्यासोऽविद्येति न सम्यक् ॥

**२७. तत्रैव मतान्तरम्, तन्निराकरणं च** - अन्ये त्वाहुः -

रजताद्यध्यासानामनर्थकारित्वाभावादमुमेव प्रकृतमितरेतराध्यासम- विद्येति मन्यन्त इति । तदपि न चारु । को हि ब्रूयाद्रजताद्यध्यासाः भवन्त्यनर्थकारिण इति । प्रसिद्धं हि लोके शुक्तिकायां रजतमध्यस्य रजतार्थी तदाकृष्टचेतास्तत्र तदादानाय प्रवर्तते, भग्नेच्छश्च दुःख प्राप्नोतीति । रज्ज्वां च सर्पमध्यस्य तं हातुकामः पलायते भीतभीत इति च । प्रसिद्धं च स्वप्ने जागारितत्वमध्यस्य स्वप्नदृग्विविधानर्था भजत इति । शत्रवो मामागत्य घ्नन्तीति मन्यते । तस्करा मां वशीकुर्वन्तीति भ्राम्यति । तथा हस्त्यादयो मां प्रति धावन्तीति मिथ्यैवाकलयति पलायते च । जीर्णकूपादिकं पतन्तमिवात्मान- मुपलक्षयति । यदापि स्वप्ने विविधभोगभाजमिवात्मानमुपलभते तदापि भोगमध्ये प्रतिबुद्धो दुःख्यति - अहो नष्टं मे तत्तादृशं सुखमिति । लज्जितो वा भवत्यात्मनः प्रवृत्तिनिवृत्ती स्वप्नमध्यगे स्मृत्वेति सर्वेषां नः प्रत्यक्षमेतत् । ननु सर्वमेतद्दुःखं मृषावासनोद्भवम् । सत्यम् । अत एव लौकिकैः परमार्थत्वेन मतः सांसारिकानर्थोऽप्येतादृश एवेत्यादर्शयितुं वेदान्तवृद्धाः संप्रतिपन्नाध्यासदुःखान्युदाहरन्ति अतो न दोषः । तदेवमितराध्यासानामप्यनर्थकारित्वं सममेवेति कश्चिद्विशेषोऽत्र येनामुमेएवाध्यासमविद्येति मन्यन्त इति सुव्याख्यानं भवेदिति ॥

**२८. अध्यासस्याविद्यात्वं विद्याविरोधित्वात् तन्निवर्त्य- त्वाच्च** - किं तर्हि प्रकृताध्यासेऽविद्याशब्दप्रवृत्तिनिमित्तमिति उच्यते । विद्याविरोधित्वादविद्या । शुक्तिकास्वरूपाधिगमरूपविद्यायां हि रजताध्यासो विरुध्यते । अतोऽविद्या रजताध्यासः । यद्यपि शुक्ति- विद्याभावेऽपि शुक्त्यविध्य भवितुमर्हति । तथापि शुक्तिविद्याविपरीत

रजतज्ञानं यथा तत्प्रतिबन्धकमनर्थकारि च न तथा तद्विद्याभाव इति रजताध्यास एव विशेषतः शुक्त्यविद्येत्युच्यते । एवं सर्वत्राध्यासे तत्तदारोप्यज्ञानं तत्तधिष्ठानाविद्यात्वेन व्यवहर्तुं योग्यं भवति । तथा वेदान्तविहितविद्याविरोधित्वात् तन्निवर्त्यत्वाच्च प्रकृताध्यासस्याप्य-विद्यात्वम् । इयांस्तु विशेषः । लोके तत्तद्विद्यायामुदितायामपि नाविद्योदयहेतुरशेषतो निवर्तते । अध्याससामग्र्या अविनाशात् । ब्रह्मविद्यायां तूदितायामशेषद्वैतज्ञानस्यात्यन्तं निवृत्तेर्न पुनरविद्या-संभवः । अतः सर्वानर्थहेतुरियमेवेति विशेषत इमामेवाविद्यां मन्यन्ते पण्डिता इति । यथा चेदं तथाग्रे स्फुटयिष्यते ।।

**२९. विद्यास्वरूपम्** - विद्याविरोधित्वात् तन्निवर्त्यत्वाच्चा-ध्यासमेवाविद्यां मन्यन्त इत्युक्तम् । का पुनरसौ विद्या ? तत्राह - **तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः ।** तद्विवेकेन तस्या अविद्याया अध्यासलक्षणाया विवेकेन वस्तुस्वरूपस्य यथावदवधारणं निश्चयं विद्यामाहुः । अविद्यायाःसकाशाद्विवेको नाम तद्वैपरीत्येन विभज्यज्ञानम् । तस्या अविद्याया विवेकः, नेदं सम्यग्ज्ञानमिति विवेचनम् । तेनेति वाऽर्थः । यद्वा तयोर्विवेकस्तद्विवेकः । प्रकृतयोर्धर्मधर्मिणोर्बुद्धिस्थत्वात् तच्छब्देन परामर्शः क्रियते । अत्यन्त-विविक्तयोर्धर्मधर्मिणोरितरेतराविवेकेन ह्यध्यासो भवतीत्युक्तम् । तद्विपर्ययेण तयोरन्योन्यविवेकेन सत्यानृतबुद्धिगोचरत्वप्रतिपत्त्या वस्तुस्वरूपस्य निर्धारणं विद्यामाहुः - इति योजनीयम् । 'इदं सत्यमिदं मिथ्या', 'अयमात्मायमनात्मा' इति विवेकाभावादेवैतयोः परस्परात्मता परस्परधर्मवत्त्वं च प्रतीयत इति निश्चयं विद्यामाहुः, पूर्वोक्ताविद्यानिवर्तकत्वादिति भावः । यथोक्तं पूज्यपादैरेवान्यत्र -

"यथाशास्त्रं क्षेत्रक्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वकं प्राग्दर्शितरूपात् क्षेत्रात् मुञ्जादिवेषीकां यथोक्तलक्षणं क्षेत्रज्ञं प्रविभज्य 'न सत्तन्नासदुच्यत' इत्यनेन निरस्तसर्वोपाधिविशेषं ज्ञेयं ब्रह्म स्वरूपेण यः पश्यति, क्षेत्रं च मायानिर्मितहस्तिस्वप्नदृष्टवस्तुगन्धर्वनगरादिवदसदेव सदिवाऽवभासत इत्येवं निश्चितविज्ञानो यः, तस्य यथोक्तसम्यग्दर्शनविरोधादपगच्छति मिथ्याज्ञानम्" (गी. भा. १३-२६) इति । यथा विवेकाभावेनेतरेतराध्यासमविद्यामाहुः, तथा तद्विपर्ययेणाधिष्ठानारोप्ययोर्विवेकेन तत्तत्स्वरूपनिर्धारणं विद्यामाहुरिति फलितोऽर्थः ॥

**३०. अविद्यास्वरूपविषये केषांचिन्मतम् -** अत्र केचिदाहुः- विद्यानिवर्त्या अविद्या नाध्यासमात्रम् । सादेरध्यासस्यानादिसंसारहेतुत्वायोगात् । नापि ज्ञानाभाव एवाविद्या । अभावस्यानादित्वसंभवेऽपि संसारभ्रमोपादानत्वायोगात् । किं तु भावरूपमेवानादि किंचित् सर्वजडोपादानमविद्याशब्दवाच्यं चिन्मात्राश्रयम् । तच्चाज्ञानमिति ज्ञानविरोधाज्ज्ञानपर्युदासेनोच्यते । तदेवानिर्वचनीयं जडात्मकं मायादिशब्दैरपर्युदासेनाप्युच्यते । तत्र ज्ञानमित्यजडो बोधस्तदाभासा वा चित्तवृत्तिर्यथायोगमभिधीयते । तत्र बोधो ज्ञानशब्दस्य लक्ष्यार्थः, चित्तवृत्तिस्तु वाच्यार्थ इति विवेकः । शुक्तिज्ञानं तदज्ञानं निवर्तयतीत्यत्र बुद्धिवृत्तिर्ज्ञानम् । तन्निवर्त्यं तु शुक्तिरजतकारणमज्ञानम् । ब्रह्मज्ञानमज्ञानं निवर्तयतीत्यत्रापि ब्रह्माकारा बुद्धिवृत्तिरेव ज्ञानम् । तन्निवर्त्यमज्ञानं तु सर्वजडोपादानभूता अविद्याशक्तिरिति ॥

**३१. उक्तमतं भाष्यबहिर्भूतं युक्त्यपेतं च -** तदेतत् सर्वमशाङ्करं मतम् । यत आह भगवान् भाष्यकारः- "अध्यासं

पण्डिता अविद्येति मन्यन्ते'' इति । एते तु वादिनोऽध्यासातिरिक्तमज्ञानमविद्यामाहुः । ''पण्डिता अविद्येति मन्यन्ते'' इत्युक्तेर्नायं भाष्यकारस्य स्वाभिप्रायः स्यादित्यपि कश्चित् । तत्त्वतीव मन्दम् । "वस्तुस्वरूपावधारणं विद्यामाहुः" इत्यस्यापि परकीयाभिप्रायत्वप्रसङ्गात् । न च तदपीष्टम् । तथा हि सति विद्याविद्यास्वरूपनिर्णय एव न कृतोऽत्र भगवतेत्यापद्येत । ततश्च व्यर्थालापो भाष्यकार इति व्यक्तं कल्पितं स्यात् । तस्मात् पण्डिता इति पूजार्थम्, न स्वाभिप्रायव्यावृत्यर्थमित्येव सुव्याख्यानम् । अतः साधूक्तमध्यासातिरिक्तभावाविद्याङ्गीकरणमशाङ्करमिति ।।

नन्वशाङ्करमपि युक्तिमदिदं मतम् । अनादेः संसारस्यानादि हेत्वाकाङ्क्षा हि न्याय्या । अध्यासस्तु सादिः । स कथं संसारानार्थहेतुः स्यादिति चेत् । अत्रोच्यते । न युक्तिमदिदं मतम् । न ह्यध्यासस्य संसारानर्थहेतुत्वानुपपत्तिमात्रेणासंभावितादृष्टश्रुतानाद्यज्ञानकल्पनं युक्तियुक्तं भवेत् । न चाध्यासस्यानादिसंसारकल्पने सामर्थ्यं नास्ति । ननु सादिरध्यासः । तस्य कथमनादिसंसारहेतुत्वमिति ? अनभिज्ञो भवानस्याध्यासवृत्तस्य । अध्यासो हि नाम भ्रान्तिः । तथा चाध्यासोऽनर्थहेतुरिति ब्रुवता तावदेवोक्तं भवति यावदुक्तं भवति संसारानर्थो नाम भ्रान्तिमात्रं न वस्तुसदिति । न च भ्रान्तिः क्वचिदपि युक्तिसहा दृष्टा । येन तत्राप्यनुपपत्तिश्चोद्येत । अतोऽङ्गीकृत्याप्यध्यासस्य सादित्वं यदि कश्चिद्ब्रूयात् तस्य संसारानर्थहेतुत्वं तदापि नात्र कंचिद्दोषमासञ्जयितुं शक्यते । वस्तुतस्त्वध्यासोऽनादिरेव । यथा चेदं तथा स्पष्टीकरिष्यते । अतो न दोषः । एतेन ज्ञानाभावरूपाज्ञानस्योपादानत्वानुपपत्तिचोदनापि निरस्ता । भ्रान्तेर्हेतुं विनापि विवेकाभावेनैव प्रतीत्युपपत्तेरनाद्युपादानानपेक्षणात् । न च

ज्ञानाभावो नाज्ञानशब्दार्थः । भगवता भाष्यकरेणैव तत्र तत्र तथा व्यवहारात् । "अविद्या विपरीतग्राहकः, संशयोपस्थापको वा, अग्रहणात्मको वा"(गी. भा. १३-२) इति, "यदि ज्ञानाभावो यदि संशयज्ञानं यदि विपरीतज्ञानं वोच्यतेऽज्ञानमिति, सर्वं हि तज्ज्ञानेनैव निवर्त्यते" (बृ. भा. ३-३-१) इति च । न च विपरीतज्ञानादि-वृत्यातिरिक्तस्याज्ञानस्य कटाक्षेणापि वीक्षणमुपलभ्यते भाष्ये । न च वाच्यम् - अनादिजडोपादानं मायाशक्त्याद्यपराभिधानमस्त्येव संमतं भाष्यकारस्यापीति । मायाया अविद्याकल्पितत्वेनैव निर्देशाद्भाष्ये। तथा हि वक्ष्यति - "सर्वज्ञस्येश्वरस्यात्मभूते इवाविद्याकल्पिते नाम-रूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारप्रपञ्चबीजभूते सर्वज्ञस्येश्वरस्य माया, शक्तिः, प्रकृतिः - इति च श्रुतिस्मृत्योरभिलप्येते" (सू. भा. २-१-१४) इति । **वार्तिककारेणाप्युक्तम्** - "अज्ञानमिथ्यासंशीति-व्यतिरेकेण नापरम् । प्रत्यर्थि मेयविषये मानस्येहास्ति किंचन ॥" (बृ. वा. ४-४-७८७) इति । तदेवं भ्रान्तेरेवाध्यासरूपाया विद्या-विरोधित्वेनाविद्याशब्दवाच्यत्वोपपत्तौ सिद्धायां तस्या एव च सर्वजड-प्रत्युपस्थापने सामर्थ्यसंभवे नानादिभावात्मकमज्ञानं नाम किंचित् सर्वजडोपादानत्वेन ज्ञाननिवर्त्यत्वेत वा मुधा कल्पयितुम् युक्तम् । अतो न केवलमशाङ्करमिदम्, किं तु सर्वथा युक्त्यपेतमपीति सिद्धम् ॥

तस्मान्नास्ति प्रतिवाद्यभिमता अध्यासातिरिक्ता अविद्या । अथाऽप्यभ्युपगम्य ब्रूमः । नेदृश्या विद्याविनाश्यत्वं संभवति । भिन्नाश्रयत्वात् । अविद्या ह्यात्माश्रयाऽभ्युपगम्यते । विद्या पुनर्वृत्तिरूपा अन्तःकरणाश्रया । तदेवं भिन्नाश्रययोः कथमनयोः समागमो वध्यघातकभावो वा स्यादिति ? नन्वविद्यापरिणामत्वादन्तःकरणस्य नैतदसंभावितम । न ह्यविद्यान्तःकरणेऽत्यन्तमेव भिन्ने येनेदं चोद्यं

भवेत् । किं त्वात्माश्रिताविद्यायाः परिणाम एवान्तःकरणम् । तथा चान्तःकरणाश्रयाविद्या स्वाश्रयकारणरूपाविद्याश्रयापि भवति, तज्जन्या च परंपरया । न च तज्जन्यैव सती विद्या कथं तामेवाविद्यां विनाशयेदिति शङ्क्यम् । तज्जन्यस्यापि तद्विनाशकत्वे दृष्टान्तभावात् । यथा हि वेणुजोऽप्यग्निस्तं समूलं दहति, एवमविद्याजन्यान्तःकरणजन्यमपि ब्रह्मज्ञानमविद्यां दन्दहीतीति न किंचिदनुपपन्नमिति । नेत्युच्यते । युक्तं तत्र यदग्निः कारकत्वाद्वेणुं दहतीति । तथा दृष्टत्वात् । ज्ञानस्य पुनः कारकत्वस्यादृष्टत्वात्, तस्याविद्या जन्यत्वस्याद्याप्यसिद्धत्वाच्च नाविद्यादाहकत्वं युक्तम् । अतो विषम उपन्यासः । वृत्तिरूपायास्त्वविद्याया विद्यासमानाश्रयत्वात्, विद्यायाः स्वोत्पत्तिमात्रेणाध्यासरूपाविद्यानिवर्तकत्वस्य शुक्त्यादिज्ञानस्थले- दृष्टत्वाच्च संभवति तादृशाविद्यायाः तन्निवर्त्यत्वम् । भाष्यसंमता चेयं वृत्तिरूपाऽविद्या । "यथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्याविक्रिय एव सन् बुद्धिवृत्त्या अविवेकविज्ञानेनाविद्ययोपलब्धा आत्मा कल्प्यते, एवमेवात्मानात्मविवेकज्ञानेन बुद्धिवृत्त्या विद्यया असत्यरूपयैव परमार्थतोऽविक्रिय एवात्मा विद्वानुच्यते" (गी. भा. २-२१) इत्युद्घोषण-दर्शनात् । अत एव **वार्तिकेऽपि** चिन्मात्रस्य विद्याविद्ये न स्तः, अन्तःकरणवृत्त्यधीनमेव तु विद्वत्त्वमविद्वत्त्वं वेत्युक्तम् - "बोधाबोधौ चितेर्नस्तः कूटस्थाज्ञप्तिमात्रतः । परायत्तप्रबोधो ना ह्यप्यात्रोत्थाद्रवेरिव ।। (बृ. वा. २-१-१२६) इति । अतोऽविवेककृताध्यास एवाविद्या नान्येति ।।

**३२. अविद्याविषये मतान्तरम् -** अन्ये त्वाहुः । यद्यप्यध्यास एवाविद्या । न केवलं स एव संसारमूलम् । सादित्वात् । न च

भ्रमस्य विवेकाभावो मूलं भवितुमर्हति, अभावत्वादेव । किं तु पूर्वपूर्वभ्रमसंस्कार एव तन्मूलम् । एवं च भ्रमसंस्कारयोरन्योन्य-हेतुफलभावता बीजाङ्कुरन्यायेनेति न कोऽपि दोषः । अत एवाविद्यावत्तत्संस्कारोऽप्यपनेतव्यः । अन्यथा ह्यपबाधिताप्यविद्या स्ववासनावशात्पुनरुद्भवेत्, अनर्थहेतुश्च स्यात् । तस्मात् सैव विद्या सार्थनाम्नी या प्रथमोत्पन्नविद्याभ्यासजनितसंस्कारोत्पन्ना निरूढ-निबिडाविद्यावासनाया अपि निरसनपटीयसी चरमवृत्तिरिति ।।

**३३. उक्तमतस्यापि भाष्यविरुद्धत्वम्** - एतदप्यसारम् । भाष्यबहिर्भूतत्वात्, श्रुतिबाह्यत्वाद् युक्त्यपेतत्वाच्च । यत्तावदुच्यते अध्यासतत्संस्कारयोर्बीजाङ्कुरवदन्योन्यहेतुफलभाव इति । तत्तथै-वास्तु व्यावहारिक्या अविद्यादृष्ट्या । "बीजाङ्कुरादिवदविद्याकृतः संसार आत्मनि क्रियाकारकफलाध्यारोपलक्षणोऽनदिरनन्तोऽनर्थः" (बृ. भा. १-१-१) इति भाष्यकारेणाप्यङ्गीकारात् । वृत्तेर्हि वृत्त्यन्तरोदये सति स्वकारणे लयात् तत्संस्कारोऽपि कश्चिच्छक्यकल्पन एव । अत एव हि पुनरपि स्वावसरे स्वसजातीयवृत्त्यन्तरोदय-स्संभवतीति । वस्तुतस्तु न कोऽपि हेतुः फलं वाऽनध्यस्तं संभवति । यो हि स्वीक्रियते हेतुत्वेन फलत्वेन वा संस्कारः, सोऽप्यध्यस्तो वा स्यादनध्यस्तो वा । यद्यध्यस्तः तदा अविद्याकल्पित एव स्यात् न तद्धेतुः । अथाऽनध्यस्तः, तदा परमार्थ एव स्यान्न विद्यानिवर्त्य इत्यनिष्टमापद्यते । न चैवं शङ्क्यम् - अध्यासस्तत्संस्कार-श्चेत्युभावप्यध्यस्तावेव । संस्कारस्य पूर्वाध्यासकार्यत्वात्, तदुत्तराध्यासस्य चाध्याससंस्कारजन्यत्वात् । अतो न कोऽपि दोष इति । ाऽपि पूर्वोत्तरकालयोरध्यस्तयोरेव स्वीकार्यत्वात्, तदध्यासार्थं पूर्व-

कालान्तर कल्पनायोगात् न हि वास्तवं जन्यत्वं जनकत्वं वानुभवन्नध्यासो नाम भवति । तस्मादध्यासस्याऽऽदिमत्त्वं पूर्वाध्याससंस्कारजन्यत्वं वा न युक्तिमदिति । यत्पुनरविद्यानाशव्यतिरेकेण तत्संस्कारोऽप्यपनेतव्यः, अन्यथा तद्वशात्पुनरप्यविद्योत्थानप्रसङ्गादिति । तत्सर्वथा न क्षमामहे । भाष्यविरुद्धत्वात् । "विद्यायां हि सत्यामुदिते सवितरि शार्वरमिव तमः प्रणाशमुपगच्छत्यविद्या (गी. भा. २-६८), "सकृदुत्पन्नैव ह्यात्मप्रतिपत्तिरविद्यां निवर्तयति" (सू. भा. ४-१-२), "ब्रह्मविद्यासमकालमेवाऽविद्यामात्रव्यवधानापगमात्" (बृ. भा. १-४-१०) इत्यसकृदुच्यते भाष्ये विद्याप्रणाश्यत्वमविद्यायाः । "न ह्येकत्वविज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुनः संभवोऽस्ति" (सू. भा. १-१-४), "विद्योत्पत्तावविद्याया ह्यस्तत्वात्तदाश्रयेऽविद्यानुपपत्तेः" (ई. १८), "परमार्थदर्शनाद्ब्रह्मवित् तृतीयं बीजभावं दग्ध्वाऽऽत्मानं प्रविष्ट इति न पुनर्जायते तुरीयस्याऽबीजत्वात् । न हि रज्जुसर्पयोर्विवेके रज्ज्वां प्रविष्टः सर्पो बुद्धिसंस्कारात्पुनः पूर्ववत्तद्विवेकिनामुत्थास्यति" (मा. भा. १२) "तस्मान्न विद्यायां सत्यामविद्यासंभवोस्ति" (ऐ. भा. सं.) - इति च विद्यापबाधिताविद्यायाः पुनरुत्थानशङ्का च निराक्रियते । तस्माद्भाष्यविरुद्ध एवायं वादः । श्रुतिबाह्यश्च । सर्वत्र हि श्रुतिषु विद्यया अविद्यानिवृत्तिरुपदिश्यते - "अविद्यायाः परं पारं तारयसि" (प्र. ६-८), "तमसः पारं दर्शयति" (छां. ७-२६-२) इति चैवमादिषु । न चाविद्यानिवृत्तेरनन्तरं संस्कारवशात्तदुत्थितिः साधनान्तरेण तन्निवृत्त्युपदेशो वा दर्शितमस्ति क्वचिदपि । अतः श्रुतिबाह्योऽयं वादः । न्यायविरुद्धश्च । न हि सम्यग्ज्ञानेन बाधितायामविद्यायां पुनस्तत्संस्कारावशेषः शक्यसंभावनः । अविद्यां हि निरवशेषमनपबाधमाना विद्यैव न भवेत् । यथाऽहुर्ज्ञानतत्त्वविदः - "आत्मासामान्यरूपोऽर्थं

ज्ञानमज्ञानमात्मनि । सकृज्जातं न चेद्धन्ति ज्ञानमेव न तद्भवेत् ॥" (बृ. वा. २-४-२०८) इति । न च विद्याया उत्पत्तिव्यतिरेकेणाविद्या निवर्तनं नामाऽन्यो व्यापारोऽस्ति । यथा चाऽहुः - "न चाविद्यासमुच्छित्तिर्ज्ञानोत्पत्त्यतिरेकतः । संसारनाशोऽविद्याया नाशान्न व्यतिरिच्यते ॥" (बृ. वा. २-४-१९५) इति । तस्माद्युक्तितोऽपि नास्ति संस्कारावशेषः । यदप्याहुः संस्कारवादिनः पित्तोपहतेन्द्रियाणां गुडमाधुर्यज्ञाने सत्यपि तिक्तताबुद्ध्यनुवृत्तिवद्विद्ययाऽविद्यानाशे सत्यपि तत्संस्कारानुवृत्तिरवकल्पत इति । तत्र पित्तोद्रेककारितस्तिक्तताप्रतिभासो दृष्टान्ते, नत्वज्ञानवशात् । न हि गुडस्तिक्त एवेति भ्रमोऽस्ति । नापि गुडमाधुर्यज्ञानाभासेन तिक्तताबुद्धिः शक्यतेऽपनोदयितुम् । अतो विषम उपन्यासः । एतेन द्विचन्द्रादिबुद्ध्यनुवृत्तिरपि व्याख्याता वेदितव्या । न च विद्याफलं तदभ्यासाज्जन्यत इति लोके दृष्टम् । यत्त्वाहुः - षड्जादिसाक्षात्कारार्थमभ्यासो दृष्ट इति । तत्र साक्षात्कार एव विद्या नापरा । तस्याश्च नाभ्यास इति विषमं निदर्शनम् । यत्र पुनरविद्यानुवृत्तिर्दृश्यते संस्कारतः, तत्र बाधितानुवृत्तिर्न कार्यक्षमा । विद्यासंस्कारोत्थस्मृत्या तस्या नियमेन बाधादित्यनवद्यम् । **यथाहुर्भगवत्पादाः** - "बाधितमपि तु मिथ्याज्ञानं द्विचन्द्रज्ञानवत् संस्कारवशात् कंचित्कालमनुवर्तत एव" (सू.भा. ४-१-१५), "न च विपरीतप्रत्ययो विद्यावत उत्पद्यते । निर्विषयत्वात् । .............. । क्वचित्तु विद्यायाः पूर्वोत्पन्नविपरीतप्रत्ययजनितसंस्कारेभ्यो विपरीतप्रत्ययावभासाः स्मृतयो जायमाना विपरीतप्रत्ययभ्रान्तिमकस्मात् कुर्वन्ति । यथा विज्ञातदिग्विभागस्याप्यकस्माद्दिग्विपर्ययविभ्रमः । सम्यग्ज्ञानवतोऽपि पूर्ववद्विपरीतप्रत्यय उत्पद्यते, सम्यग्ज्ञानेऽप्यविस्रम्भात्

शास्त्रार्थविज्ञानादौ प्रवृत्तिरसमञ्जसा स्यात्, सर्वं च प्रमाणमप्रमाणं संपद्येत" (बृ. भा. १-४-१०) इति । **वार्तिककारा** अप्याहुः "बाध्यबाधकयोर्यस्मात् संबन्धः सकृदेव तु । संबन्धोत्तरकाले तु तत्स्मृत्योरेव सङ्गतिः ।।" (बृ. वा. ४-४-९५८) इति । अतोऽविद्याबाधे सति न किंचिदवशिष्यते यन्नाशार्थं विद्याभ्यासो विद्यान्तरं च गवेषणीयं स्यादिति बोध्यम् । तस्मादयुक्तोऽयमविद्या-संस्कारवाद इत्यलं पल्लवितेन ।।

तस्मादात्मानात्मनोरितरेतराध्यास एवाविद्या । तद्विपर्ययेण वस्तुस्वरूपावधारणमेव च विद्येति स्थितम् ।।

**३४. अध्यासनिरूपणफलम्** - अथेदानीमध्यासनिरूपणस्य फलमाह - **तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाणुमात्रेणापि स न संबध्यते ।** तत्र प्रत्यगात्मानात्मनोस्तद्धर्माणां चेतरेतरभावेन यो व्यवहारः तस्मिन् । एवं सति सोऽविद्यात्मक एव, आध्यासिक एव न वास्तविक इति, वस्तुस्वरूपनिर्धारणात्मकविद्या विनिवर्त्य इति चैवं निश्चिते सति । इदं फलति । किम् ? यत्रात्मनि यदध्यासः यस्यानात्मनो बुद्ध्यादेस्तद्धर्माणां वा, यत्रानात्मनि बुद्ध्यादौ यदध्यासः यस्यात्मनस्तद्धर्माणां वा अध्यासः । तत्कृतेन तादृशाध्यासकृतेन दोषेण गुणेन वा स न संबध्यते । अनात्माध्यासकृतेन दोषेण नात्मा संबध्यते । आत्माध्यासकृतेन गुणेन वाऽनात्मा न संबध्यते इत्यर्थः । अध्यासो हि नामातस्मिंस्तद्दृष्टिः । न हि दृष्टि-मात्रेण तादूप्यं भवति वस्तुनः । न हि शुक्तौ रजतदृष्टिमात्रेण तस्यां कोऽपि गुणसंबन्धो भवति । आकाशे तलमलवत्त्वादिदृष्टिमात्रेण वा तस्मिन् दोषसंबन्धः कश्चित् । 'अणुमात्रेणापि न संबध्यते'

इतीदमुक्तं भवति - न केवलं विद्यया निवृत्तिसमनन्तरम्, किं नाम, तत्पूर्वमप्यध्यासदशायां तात्कालिकेनापि नाध्यासिकेन दोषेण गुणेन वा अधिष्ठानं संबध्यत इति । अत एवाध्यस्तस्य विद्ययापोहोऽप्यवकल्पते वस्तुधर्मत्वाभावात् । न हि क्वचिद्वस्तु-धर्मस्यापोढ्री विद्येति च ॥

एतेन मिथ्याध्यासकाले नवीनमेव किंचिदनिर्वचनीयं प्राति-भासिकं समुत्पद्यत इति, विद्या तन्निवृत्तिः क्रियत इति वदन्तोऽनुशाङ्करवेदान्तिनः परास्ता भवन्ति । तेषां पक्षे ह्यनि-र्वचनीयोत्पत्तिनिवृत्तिभ्यामधिष्ठानस्य विशेषोऽभ्युपगतः स्यात् । तच्चा-युक्तम्, भाष्यकारानभिमतं च । वक्ष्यति हि "न त्वहिबुद्धिकाले तदपगमकाले च वस्तुनः कश्चिद्विशेषः स्यात्" (सू. भा. १-४-६) इति ॥

अत एव विद्याविद्याकृतोऽपि विशेषो नात्मन इति सिद्धं भवति । तयोरपि बुद्धिवृत्तिमात्रत्वादात्मधर्मत्वानुपपत्तेः । अविद्या-दृष्ट्यैव तु विद्वान् अविद्वान् इति च व्यवहार इति च भाष्योक्तिरुदाहृता प्रागेव । तन्न प्रस्मर्तव्यम् । पुनरप्येतत् स्वावसार एव विवरिष्याम इत्यलं प्रसङ्गागतप्रपञ्चनेन ॥

अत्र प्रकृतं त्विदम् । यद्यपि लोके प्रततैषा आत्मानात्मनोरितरेतराध्यासरूपाऽविद्या तथापि न तावन्मात्रेण वस्तुतोऽप्यात्मनः संसारित्वं भवति । तथा चात्मस्वरूपयाथात्म्य-बोधनाय श्रुतीनां प्रवृत्तिर्निष्प्रत्यूहा । तदर्थनिर्णयाय च ब्रह्मजिज्ञासाशास्त्रस्य प्रवृत्तिरिति ॥

# ५. अथ व्यवहारमात्रस्याऽऽविद्यकत्व प्रतिपादकं भाष्यम्

तमेतमविद्याख्यामात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः । सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि ।।

कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति ? उच्यते । देहेन्द्रियादिष्वहं-ममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्य-नुपपत्तेः । न हीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः संभवति । न चादिष्ठानमन्तरेणेन्द्रियाणां व्यवहारः संभवति । न चानध्यस्तात्मभावेन देहेन कश्चिद्-व्याप्रियते । न चैतस्मिन् सर्वस्मिन्नसति असङ्ग-स्यात्मनः प्रमातृत्वमुपपद्यते । न च प्रमातृत्वमन्तरेण प्रमणप्रवृत्तिरस्ति । तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च ।।

पश्वादिभिश्चाविशेषात् । यथा हि पश्वादयः शब्दादिभिः श्रोत्रादीनां संबन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते, अनुकूले च प्रवर्तन्ते ।

यथा दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति पलायितुमारभन्ते, हरिततृण-पूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति । एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान् बलवत उपलभ्य ततो निवर्तन्ते । तद्विपरीतान् प्रति प्रवर्तन्ते । अतः समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः । पश्वादीनां च प्रसिद्धोऽविवेकपुरस्सरः प्रत्यक्षादिव्यवहारः । तत्सा-मान्यदर्शनात् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादि-व्यवहारस्तत्कालः समान इति निश्चीयते ॥

**३५. ग्रन्थसंबन्धः** - अधुना सर्वस्यापि व्यवहारस्याविद्यात्म-कत्वं यदादौ प्रतिज्ञातम् "मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः" इति, तद्विवृण्वन्नाह - **"तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाण-प्रमेयव्यवहाराः प्रवृत्ताः"** इत्यादिना ॥

**३६. लौकिकव्यवहारस्याध्यासपुरस्सरत्वप्रतिज्ञा** - अयमर्थः । तमादौ प्रतिज्ञातम् एतम् पश्चाच्च लक्षणाक्षेपसमाधानाभ्यां संभावितम्, अविद्याख्यम् अविद्या इत्याख्या अपराभिधानं यस्याध्यासस्य तम्,आत्मानात्मनोरितरेतराध्यासं पुरस्कृत्य निमित्तीकृत्य । उपलक्षण-मेतत् । तद्धर्माणामपीतरेतरत्राध्यासं निमित्तीकृत्येत्यपि द्रष्टव्यम् ।

काचित्तन्मूलभूता अविद्यास्तीति वदन्तो विघटिता भवन्ति । यथोक्ताध्यासं पुरस्कृत्य सर्वे व्यवहाराः प्रवृत्ताः । अथ के ते व्यवहाराः ? तत्रोत्तरम् - **प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्चेति** । "यस्य प्रेप्साजिहासाप्रयुक्तस्य प्रवृत्तिः स प्रमाता । स येनार्थं प्रमिणोति तत्प्रमाणम् । योऽर्थः प्रमीयते तत्प्रमेयम् । यदर्थविज्ञानं सा प्रमितिः" इति हि प्रमाणविदः । तत्र 'इदं प्रमाणम्' 'इदं प्रमेयम्' इति कृत्वा ये व्यवहाराः प्रत्यक्षादिशब्दप्रत्ययरूपाः, तदनुगुणप्रवृत्तिनिवृत्तिरूपाश्च ते सर्वेऽप्युक्ताविद्याख्याध्यासपुरस्सरमेव प्रवृताः । लोके भवन्ति ये ते लौकिकाः । वेदे भवन्ति ये ते वैदिकाः । न केवलं लौकिकव्यवहारा अविद्यां पुरस्कृत्य प्रवृत्ताः, अपि तु वैदिकाश्च । तेषामपीष्टानिष्ट-प्रेप्साजिहासाप्रयुक्तत्वाविशेषादित्यर्थः । यद्यपि प्रतिज्ञाभाष्ये "नैसर्गिकोऽयं लोकव्यवहारः" इत्येतावदुक्तम् । तथापि लोक्यत इति लोको ग्राह्यप्रमेयवर्गः, लोकयतीति लोको ग्राहकप्रमातृवर्गः, लोक्यतेऽनेनेति लोको ग्रहणसाधनप्रमाणवर्गः - इत्येवं लोकव्यवहारशब्दस्य प्रमातृप्रमाणप्रमेयव्यवहारार्थकत्वं स्वीकृत्येह तदेव प्रपञ्च्यत इति नाधिकावापशङ्का भवति । अथवा लोकानां व्यवहारो लोकव्यवहारः इत्यङ्गीकारे सर्वोऽपि लौकिको वैदिकश्च व्यवहारो लोकव्यवहार एव भवतीत्यनवद्यम् ॥

**३७. शास्त्रव्यवहारस्याप्यध्यासपूर्वकत्वम् - तथा सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि** । न केवलं व्यवहाराः, किं तर्हि **सर्वाणि च शास्त्राणि यथावर्णिताविद्यां पुरस्कृत्यैव प्रवृत्तानि** । विशेषकथनमिदमुत्तरत्राधिकाशङ्का-परिहारार्थम् । यथा प्रमातॄणां प्रवृत्तयः, यथा च प्रमाणानां लौकिकानाम्,

एवं शास्त्रप्रवृत्तयोऽप्यध्यासपूर्वका एव । न तु शास्त्राणां वेदवाक्य-रूपाणामपौरुषेयत्वादिहेतुविशेषादन्यादृशी प्रवृतिर्भवतीत्यभिप्रायः । विधिपराणि "यजेत" "जुहुयात्" इत्यादिरूपाणि, प्रतिषेधपराणि "न हिंस्यात्", "न हन्तव्यः" इत्यादिरूपाणि, मोक्षपराणि च "उपासीत" "श्रोतव्यो मन्तव्यः", "ब्रह्मैवेदं सर्वम्" इत्यादिरूपाणीति विवेकः। अत्र सर्वत्र तत्तत्परत्वं नाम तत्तत्प्रपञ्चनद्वारा पुरुषार्थोपायप्रकाशन-परत्वमिति ज्ञेयम् । सर्वाण्यप्येतानि शास्त्राण्यविद्यांपुरस्कृत्यैव, लोकसिद्धमध्यासं द्वारीकृत्यैव प्रवृत्तानीत्यनुषङ्गः । अध्यासकर्तैव पुरुषोऽधिक्रियते शास्त्रोक्तसाधनेषु । अध्यासं समाश्रित्यैव च साध्यसाधनबन्धमोक्षादिपदार्थान् प्रतिपादयन्ति शास्त्राणि । न तु वस्तुसन्त एव ते पदार्था इति भावः । **उक्तं ह्यभियुक्तैः** - "न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ।।" (गौ. का. २-२२) इति ।।

**३८. प्रमाणानामविद्यावद्विषयत्वे शङ्का - कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च ?** - इतीदमध्याससद्भावमुपपादयितुं शङ्कोत्थापनम् । अत्रायं शङ्कितुरभिसंधिः । सिद्धे खलु भवद्वर्णिताध्याससद्भावे तस्य विद्याविनिवर्त्यत्वरूपमविद्यात्वं सिध्यति । तथा च ब्रह्मजिज्ञासोप-क्रमोपपत्तिः । स तु सद्भावो नाद्यापि साधितः । न हि लक्षण-प्रणयनाविरोधप्रदर्शनमात्रेणाध्यासः सेद्धुमर्हति । न हि शुक्तिरजतादि-कतिचनलोकसिद्धाध्यासनिदर्शनमलं सर्वस्यापि व्यवहारस्य वर्णिता-ध्यासपूर्वकत्वोपपादनाय । तत्कथमिदं सिद्धवन्निगदति भगवान् "तमेतमध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेय व्यवहारा प्रवृत्ताः सर्वाणि च शास्त्राणि" इति ?

तत्र प्रमाणप्रमेयव्यवहारा अविद्यावद्विषया इत्येव तावन्नयुज्यते । तथा सति प्रमातृत्वप्रमाणत्वयोरेवानवक्लृप्तेः । न हि प्रमाणेन प्रमेयपरिच्छेदायाप्रवर्तमानः प्रमाता नाम भवति । न च तस्य प्रमातृत्वं प्रमाणप्रमेयादिविवेकमन्तरेणावकल्पते । अतः प्रमाता तावन्नाविद्यावानित्यभ्युपगन्तव्यं भवतापि । अन्यथा व्याघातात् । एवं प्रमाणानामपि न प्रमाणत्वमवकल्पते तेषामविद्यावदाश्रयत्वेऽभ्युपगम्यमाने । कथम् ? यथार्थज्ञानं हि प्रमा, तत्करणं च प्रमाणम् । तत्राविद्यां पुरस्कृत्य प्रवृत्तस्य करणस्य प्रमाजननसामर्थ्यमेव न विद्यत इति कथं तस्य प्रमाणत्वमवकल्पेतेति ? तस्मात्प्रमाणानामविद्यावद्विषयत्वे प्रमातृप्रमाणयोस्तत्त्वानवक्लृप्तिप्रसङ्गान्नाविद्यावद्विषयाणि तानीत्यवश्यमभ्युपेयम् । न च प्रमाणे दोषस्तज्जनितज्ञाने मिथ्यात्वं वा प्रतीयते नियमेन, येन सर्वस्यापि प्रमाणस्यासमीचीनतया अविद्यावद्विषयत्वं स्यात् । **तथा ह्याहुः** - "यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्यः" (शा. भा. १-१-५) इति । तस्माद्यत्र प्रयत्नेनान्विच्छतापि न दोषोऽवगम्यते, यतश्च प्रमाणादर्थमुपलभ्य प्रवृत्तस्य तत्तत्फलेन योगः न तु तज्जनितस्य ज्ञानस्य नैतदेवम् इति बाधः न तन्मिथ्येत्येव युक्तम् । अन्यथा सर्वप्रमाणानामप्रामाण्यप्रसङ्गात् । तस्मादसिद्धं प्रमाणानां सर्वेषामविद्यावद्विषयत्वमिति ॥

## ३१. शास्त्राणि च नैवाविद्यावद्विषयाणीति शङ्का -

सर्वाणि च शास्त्राण्यविद्यावद्विषयाणीति तु प्रागेवासिद्धम् । कुतः ? पुरुषविशेषानाश्रयणाच्छास्त्रस्य । जन्मान्तरलोकान्तरेष्टानिष्ठप्राप्तिपरिहारोपायविशेषप्रकाशनाय हि विधिनिषेधशास्त्रपवृत्तिः । न च

तत्तदुपायप्रकाशनाय प्रवृत्तं तत्र प्रकाशयति । न चाविद्यावन्तं पुरुषविशेषमाश्रित्य प्रवर्तते । अपौरुषेयत्वात् । न च कश्चिदपि दोषः शक्यशङ्कः शास्त्रवचने । नापि तज्जनितं ज्ञानं विपर्येति, 'नैतदेवम्' इति । नियमेनानधिगतासन्दिग्धाबाधितार्थबोधकं हि शास्त्रमिति । स्यादेतत् - यद्यपि स्वतो निर्दुष्टं शास्त्रम्, तथाप्यधिकारिद्वारा शङ्क्यो भवति यः कश्चन दोषातङ्कोऽस्येति । तदप्यपेशलम् । न ह्यविदित्वा जन्मान्तरलोकान्तरसंबन्धिनमात्मानं कश्चिदधिक्रियते शास्त्रविहितेषु तन्निषिद्धेषु वा कर्मसु । तथा हि वेदविदः प्राहुः "स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति" (शत. ब्रा. १२-५-२-८) 'गर्तं पतिष्यामि' इत्यादिवचनबलेन देहव्यतिरिक्तोऽहंप्रत्ययगम्य आत्मा सिध्यति प्रत्यभिज्ञाश्रयणेनेति । न च लोकद्वयसंबद्धस्यैकस्यात्मनोऽवेदने "स्वर्गकामो यजेत" (?) इत्येवमादीनां शास्त्राणामर्थवत्तामाकलयितुं शक्नुयात् कश्चित्, तदुक्तकर्मसु प्रवर्तितुं वा समीहेत । न च पश्वादीनप्यधिकुर्वन्ति शास्त्राणि, येनाधिकारिद्वारा अविद्यावद्विषयत्वं स्यादपि तेषाम् । अर्थी समर्थो विद्वानिति ह्यधिकारिविशेषणम् । तस्मान्नाविद्यावद्विषयाणि विधिप्रतिषेधशास्त्राणि । नतरामविद्यावद्विषयाणि मोक्षपराणि शास्त्राणि । न हि विवेकादिसाधनं विना अधिकृतो भवति कश्चिन्मोक्षशास्त्रेषु । तस्मान्न घटमानमिदं यत् सर्वाणि च शास्त्राण्यविद्यावद्विषयाणीति ॥

तदेवं नैव सिद्धं सर्वेऽपि प्रमाणप्रमेयव्यवहारा अविद्याख्यमध्यासं पुरस्कृत्य प्रवृत्ताः सर्वाणि शास्त्राणि चेति । अतो नाध्यासनिवृत्त्यर्थं ब्रह्मजिज्ञासा युक्तेत्याक्षेप्तुरभिप्रायः ॥

**४०. अविद्यासद्भावप्रदर्शनग्रन्थावतारः** - अथ समाधानं

वक्तुमारभते - **उच्यत** इति । अयं भावः । न तावदध्याससद्भावे शङ्का समुन्मिषति । तस्य सर्वविधव्यवहारव्यापकत्वेन दृश्यमानत्वात् । अत्राक्षेप्त्रा तावत् प्रमाणानां निरूपणेन प्रमातृस्वरूपनिरूपणेन च प्रमाणानामविद्यावद्विषयत्वं नास्तीत्युक्तम् । उभयत्राप्ययुक्तमेवोक्तं तेन । प्रमाणप्रवृत्तिपरीक्षणेन पुरुषप्रवृत्तिपरीक्षणेन चाविद्यापुरस्सरत्वमेव तु सर्वेषां प्रमाणानां सेत्स्यतीति वयं ब्रूमः । तथा चानवसरदुःस्थोऽयमुपालम्भ इति ।।

**४१. प्रमाणप्रवृत्तिनिरूपणेन तद्व्यवहारस्याविद्यापुरस्सरत्वसमर्थनम्** - यत्तावदुच्यते प्रमाणानामविद्यावद्विषयत्वे प्रमातुः प्रमातृत्वानवक्लृप्तिः, प्रमाणानां च प्रमाणत्वानवक्लृप्तिरिति । तदसत् । कुतः ? अविद्यापुरस्सरत्व एव तदुभयावक्लृप्तेः । कथम् ? **देहेन्द्रियादिष्वहंममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः ।** वस्तुसङ्ग्रहवाक्यमिदम् । तदेतद्विवृणोति न हीन्द्रियाण्यनुपादायेत्यादिना । अयमर्थः । देहः, इन्द्रियाणि, उपलब्धिः, व्यापारः, फलेनाभिसम्बन्धः, सुखदुःखसंवेदनं चेत्येतानि देहेन्द्रियादीनि । तेष्वहंममाभिमानः, 'अहमिदम्', 'ममेदम्' इति रूपः प्रत्ययः । स चातस्मिंस्तत्प्रत्ययलक्षणोऽध्यास इत्युक्तमधस्तात् । तादृशाभिमानरहितस्य प्रमातृत्वं नोपपद्यते, ततश्च प्रमाणप्रवृत्त्यनुपपत्तिः । कथम् ? न हि प्रमाणप्रवृत्तिं विना कस्यचिदर्थोपलब्धिर्भवेत् । यस्याः समनन्तरमेव प्रेप्सा जिहासा वा तस्मिन्नर्थे । तानि पुनः प्रमाणानि स्वयं न प्रवर्तन्ते, किं तु स्वप्रवर्तकमन्यमपेक्षन्ते । यः प्रमातेत्युच्यते । तत्र प्रमातृत्वमेव तावद्देहेन्द्रियादिषूक्ताभिमानशून्यस्य नोपपद्यते । कथम् ? तदेतत्प्रदर्शयितुमारभते - न हीत्यादिना । **न हीन्द्रिया-**

**ण्यनुपादाय प्रत्यक्षादिव्यवहारः संभवति ।** प्रत्यक्षानुमानोपमान-शब्दाख्यानि, अर्थापत्त्यनुपलब्धिसहितानि वा तानि, प्रत्यक्षादीनि । तेषां प्रत्यक्षादीनां प्रमाणानां व्यवहारः 'ममेदं प्रत्यक्षमभूत्', 'मयेदमनुमितभूत्' - इत्यादिप्रत्ययव्यपदेशलक्षणो व्यवहारः । स च नेन्द्रियाण्यनुपादाय तेषां व्यापारमस्वीकृत्य संभवति । इन्द्रिय-व्यापारनियतत्वात्तादृशव्यवहारस्य । नन्वेतदेव कथम् ? उच्यते । अक्षस्याक्षस्य प्रतिविषयं वृत्तिः खलु प्रत्यक्षं नाम । इन्द्रिय-सन्निकर्षश्चाक्षवृत्तिः । तस्मात् प्रत्यक्षव्यवहारस्तावदक्षव्यापारं विना नोपपद्यते । तथानुमानादिव्यवहारोऽपि । प्रत्यक्षोपजीवित्वात् तेषाम् । नेदमत्र विविक्षितमिन्द्रियव्यापारोऽसाधारणकारणं सर्वत्र प्रमाणव्यवहार इति । किं तर्हि, इन्द्रियव्यापारं विना नैवात्मलाभः स्यात् प्रमाणव्यवहारस्येति । तथा हि । लिङ्गलिङ्गिनोर्धूमवह्न्योः संबद्धयोर्दर्शनेन व्याप्तिस्मृतिः । ततश्च अप्रत्यक्षोऽर्थो वह्न्यादि अनुमीयते । अतो लिङ्गदर्शनपूर्वकत्वादनुमानव्यवहारस्येन्द्रिय-व्यापारापेक्षा भवति । एवं गोगवयसमानधर्ममर्थमिन्द्रियसन्निकर्षादुप-लभ्यैव गवयप्रति-पत्तिरित्यत उपमानव्यवहारस्यापि तदपेक्षा भवति । एवं तेन विनानुपपद्यमानस्यार्थस्य पीनत्वस्य दर्शनाद्दिवाभोजनरहितस्य देवदत्तस्य रात्रिभोजनं प्रतिपद्यत इत्यर्थापत्तिव्यवहारस्यापि तदपेक्षा । एवं भूतले घटो नेत्यनुपलब्धिव्यवहारस्यापि भूतलरूपाधिकरणप्रत्यक्ष-पूर्वकत्वादस्ति तदपेक्षा । तदेवमिन्द्रियव्यापारमनुपादाय प्रत्यक्षादि-व्यवहारो न संभवतीति स्थितम् । अत्र यद्यपि वादिनः प्रत्यक्षादीनां सङ्ख्येयत्तायां लक्षणपरिष्कारे च विप्रतिपद्यन्ते तथपि साक्षात् प्रणाळिकया वेन्द्रियाणां व्यापारमपुरस्कृत्य प्रमाणव्यवहारो नैव भवतीत्यत्र तु न कस्यचिद्विमतिर्भवति । अतः प्रमाणलक्षणसङ्ख्यादि-

निर्धारणे नास्त्यस्माकं निर्भर इति ज्ञेयम् । नन्वस्तु नामैतत् । कथमेतावता प्रमाणानामविद्यापुरस्सरत्वम् ? तत्रोच्यते । **न चाधिष्ठानमन्तरेणेन्द्रियाणां व्यवहारः संभवति ।** न हि शरीररूपमाश्रयं विना प्रत्यक्षादिव्यवहारापेक्षितानामिन्द्रियाणां व्यापारः संभवति । आश्रयो हि शरीरं चेष्टादीनाम् । यथाहुः - "चेष्टेन्द्रियार्थाश्रयः शरीर" - मिति (न्या. सू. १-१-११) । ईप्सितं जिहासितं चार्थमुद्दिश्य या चेष्टा तेषामाश्रयः शरीरम् । स्वविषयेषु शब्दादिषु यानि प्रवर्तन्ते तेषामिन्द्रियाणामाश्रयः शरीरम् । तदनुग्रहेणानुगृह्यन्ते, तदुपघाते चोपहन्यन्ते । एवं तदनुविधानात् तदाश्रितानीन्द्रियाणि । विषयोपलब्धिनिमित्तोऽर्थः सुखं दुःखं च । तदाश्रयः शरीरम् । सत्येव शरीरे तत्संभवात् । तदेवं प्रमातृत्वप्रयोजकानीन्द्रियाणि, तत्प्रवृत्तिः, फलाभिसंबन्धकृतसुखदुःखसंवेदनं चेत्येतत् सर्वं शरिराश्रितमेव । तदेतत् सर्वमभिसन्धायोक्तम् - "न चाधिष्ठानमन्तरेणेन्द्रियाणां व्यवहारः संभवति" इति । अस्तु सर्वमेवेदम् । तथापि प्रमाणानामविद्यापुरस्सरत्वे किमायातम् ? तत्राऽऽह - **"न चानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते"** इति । अयमाशयः । उक्तमधस्ताद्यथा देहाश्रित इन्द्रियाणां व्यापारः । तदपेक्षश्च प्रत्यक्षादिव्यवहारः । तत इदं निष्पन्नं शरीरसंबद्धेन भवितव्यमात्मना प्रमाणव्यवहारसिद्ध्यर्थम् । अन्यथा ह्यात्मनः प्रमातृत्वमेव न स्यादिति दूरे तदाश्रितानां प्रमाणानां प्रवृत्तिरिति । नन्वस्तु शरीरसंबन्धोऽपि का नो हानिः ? न कापि,यदि संबन्ध एव यः कोऽप्यवगम्येत । न त्वसाववगम्यते । तथा हि । न तावद्देहेनाऽऽत्मनस्तादात्म्यम् । विषयविषयिणोस्तदनुपपत्तेः । न च संयोगसमवायौ । न ह्यात्मनो

निरवयवस्यासंसर्गिणोऽद्रव्यात्मकस्य देहेन संयोगः समवायो वा युज्यते । न चाऽन्यः संबन्धः कल्पनीयः समस्ति । चिन्मात्रस्य स्वयंसिद्धपरमार्थसद्रूपस्य तद्विरुद्धस्वभावेन देहेन कस्यचिदपि संबन्धस्य कल्पयितुमशक्यत्वात् । निराकरिष्यते च भाष्ये समन्वयाधिकरणे धर्माधर्मनिमित्तः स्वस्वामिभावः संबन्धः । अतोऽध्यास एव संबन्ध इति प्राप्नोति । तदिदमुक्तम् - 'न चानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियत' इति । अथ कोऽयमनध्यस्तात्मभाव इति ? आत्मनो भावः, आत्मभावः । आत्मत्वमिति यावत् । अध्यस्त आत्मभावो यस्मिन् स देहोऽध्यस्तात्मभावः । अपि चात्मनि भावः, आत्मभावः । अध्यस्त आत्मभावो यस्य सोऽयं देहोऽध्यस्तात्मभावः । आत्माश्रितत्वेन समारोपितसत्त्व इति यावत् । अध्यस्तात्मभावो न भवतीत्यनध्यस्तात्मभावः । तादृशेन देहेन न कशचिद्व्याप्रियते । नायमभिप्रायोऽनध्यस्तात्मभावो यो देहः तेन न कश्चिद्व्याप्रियत इति । तादृशदेहस्यैवाऽनभ्युपगमात् । अपि तु, यदि देहाश्रितव्यापारेण व्यापारवानात्मा अङ्गीकर्तव्यः तर्हि देहेनाऽध्यस्तात्मभावेनैव भवितव्यम् । अन्यथा तद्व्यापारेणाऽऽत्मनि व्यापारवत्त्वासङ्गतेरिति ॥

**४२. देहात्मनोः संबन्धस्याऽऽध्यासिकत्वे शङ्कासमाधाने** - स्यादेतत् । योऽसौ देहस्याध्यस्तात्मभावः प्रतिज्ञातः स न शक्यसंभावनः । देहात्मनोरन्योन्याध्यासे उभयोरप्यसत्त्वप्रसङ्गात् न चैतदिष्टम् । यथा हि शुक्तिकादिष्वध्यस्तानां रजतादीनां नित्यमेवस्वाधिष्ठानेऽत्यन्तासत्वं दृष्टम्, तथा देहात्मनोरत्यन्तमेवासत्वं प्राप्नोति तौ चेत् परस्पराध्यस्तौ । देहस्य हि स्वतः सत्त्वाभावः

अध्यस्तत्वात् । आत्मनि च तस्य सत्त्वाभावः । अध्यस्तत्वादेव । एवमात्मनोऽपि स्वतो देहे चाभाव एव, अध्यस्तत्वाविशेषात् इति शून्यवाद एव प्रसज्येत । ततश्च प्रतिज्ञाहानिः । सत्यानृतयोर्हि चिदात्मानात्मनोर्मिथुनीकृत्य लोके व्यवहार इति प्रतिज्ञातमिति । न च वाच्यम् - अस्तु देहस्यैव स्वरूपेणाध्यस्तत्वम् । आत्मनस्तु देहे संसृष्टत्वेनैवाध्यस्तत्वम् । तथा च नोक्तशङ्कावकाश इति । तथापि खलु देहस्याऽऽत्मन्यसत्त्वं प्रत्यक्षविरुद्धं प्रसज्येतैव । आत्मनश्च संसृष्टत्वेनैवाध्यस्तत्वे 'अहं मनुष्यः' इति तादात्म्यप्रतीतिर्न स्यादिति तत्रापि दृष्टविरोधः । तस्मान्न देहात्मनोः परस्पराध्यासः, न वा देहमात्रस्याऽऽत्मन्यध्यासः दृष्टविरोधप्रसङ्गात् । तदत्र वास्तविक एव कश्चित् संबन्धः कल्पयितव्यः । वयं तु पश्यामो वंशस्तंभवत् तयोः संयोग एव संबन्ध इति । न चाध्यस्तात्मभावेन देहेन विना व्यापारासंभवश्चिदात्मनि । शरीराधिष्ठातृत्वेनैव तत्संभवात् । न हि स्वव्यापारः स्वाश्रिताध्यस्तात्मभावत्वनियतः । दृश्यन्ते ह्यनध्यस्तात्म-भावमपि वीरणादिकं व्यापारयन्तः कटकर्त्रादयः । तस्मादयुक्तमुक्तं न चानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियत इतीति ।।

अत्रोच्यते । सर्वमेवेदमयुक्तम् । यत्तावदुच्यते देहादेरन्योन्याध्यासे उभयोरप्यसत्त्वप्रसङ्ग इति । तदसत् । असङ्गत्वादात्मनः । सर्वसङ्गरहितः खल्वात्मेष्यते । न च तस्याऽध्यासमात्रेणासत्त्वं प्रसञ्जयितुं शक्यते । ननु सर्वथा चेदसङ्गः, कथं तर्हि तस्य देहेऽध्यासः ? न चेदध्यासः कथं वाऽध्यस्तात्मभावो देह इति ? सत्यम्, अध्यास्तात्मभाव एव देहः । तेन तु देहेऽध्यस्तात्मन एवासत्त्वं स्यान्न पुनरसङ्गात्मनोऽपि । अध्यस्तात्मा त्वाभासमात्रमिति तस्याऽसत्त्वेऽपि न क्षतिः । न चैवं देहस्यापि सत्त्वप्रसङ्गः ।

आत्मन्यध्यस्ताद्देहादन्यस्य देहस्याऽनिरूपणात् । यच्चोच्यते देहस्याऽऽत्मन्यसत्त्वे प्रत्यक्षविरोध इति । तदप्यसत् । आत्मनः प्रत्यक्षेणाऽग्रहणात् । न हि प्रत्यक्षेणाऽऽत्मा तदधिकरणकत्वेन देहो वा दृष्टः येन विरोधः स्यात् । यत्पुनरुच्यते वंशस्तम्भा-दिवन्नित्यसंयुक्तौ देहात्मानौ भविष्यत इति । तदतिदवीयः । कथम्? वंशानां स्तंभानां चाऽऽधाराधेयभावेन संयोगो दृष्टः । तेन च 'गृहम्' इत्येकप्रत्ययविषयत्वं तयोः । इह पुनर्न देहात्मनोः पृथक् सिद्धिः संयोगविशेषो वा दृष्टोऽस्ति, येन 'अहं प्रमाता' इत्यादिव्यवहारोऽपि संयोगप्रयुक्तो व्याख्यायेत । अपि च समानजातीयानां स्पर्शादिमतां च वंशस्तम्भादीनां संयोगो दृष्टः । इह पुनर्देहात्मानौ न समानजातीयौ, आत्मा च निरवयवः स्पर्शादिरहितश्चेति वैषम्यम् । अभ्युपगते च संयोगे देहात्मनोर्वंशस्तंभादिवत् पारार्थ्यमनित्यत्वं च प्रसजेत् । तच्चानिष्टं सर्वेषामप्यात्मवादिनाम् । तस्माद्दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यान्न देहात्मनोः संयोगो भवितुमर्हति । न च समवायः संभवति । देहात्मनोर्गुण-गुणित्वकार्यकारणत्वाद्यनभ्युपगमात् । वैशेषिकादिपरिभाषामात्र-सिद्धत्वाच्च समवायस्य । तस्मान्न कोऽप्यस्ति वास्तविकः संबन्धः न च संबन्धं विना देहव्यापारेण व्यापारवान् भवितुमर्हत्यात्मा यत् पुनरुक्तं शरीराधिष्ठातृत्वेनैव देहादिव्यापारयितृत्वं संभवतीति तदप्येतेन प्रत्युक्तं भवति । अधिष्ठातृत्वस्याऽद्याप्यसिद्धत्वात् । न हि शरीराधिष्ठातृत्वोपपादकः कोऽपि वास्तविकः संबन्धोऽद्यापि साधितोऽस्ति । कटकर्तृनिदर्शनं तु वैषम्यादेवोपेक्ष्यम् । कटकर्ता हि स्वयं व्यापारवान् वीरणादिकं व्यापारयति । इह पुनरात्मा स्वयं व्यापाराभाववान् असङ्गश्चेति वैषम्यम् । न च शङ्कितव्यम् - आत्माप्यात्मीयैः स्मृतीच्छाप्रयत्नैः कर्महेतुभिः स्वयं व्यापारवानेवेति ।

तेषामप्यध्यासपूर्वकत्वात् । अध्यासनिमित्तेष्टानिष्टरूपक्रियाफलानुभव-जनितसंस्कारनिबन्धना हि स्मृत्यादयः । सोऽपि पूर्वतनः क्रियाफलानुभवः प्रमाणव्यापारमूलकत्वात् समाक्षिपत्येव प्रमाण-प्रवृत्तिमूलं देहाध्यासम् । अतो न कुत्रापि स्वतो व्यापारवत्त्वं शक्यशङ्कमात्मनि तदेवमसङ्गत्वान्नाध्यासं विना देहव्यापारेणाऽऽत्मनि व्यापृतत्वं संभवतीति सम्यगेवोक्तं नानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियत इत्यलमतिविस्तरेण ।।

## ४३. प्रमाणानामविद्यापुरस्सरत्वोपपादनोपसंहारः -

एवं तावदिदमुपपादितं यदिन्द्रियव्यापारं विना न प्रत्यक्षादिव्यवहारः सिध्यति । इन्द्रियाणि च स्वाधिष्ठानं देहमाक्षिपन्ति । आत्मनि व्यापारश्च इन्द्रियाधिष्ठानभूतदेहस्याध्यस्तात्मतामपेक्षत इति । अथ माभूदिन्द्रियाणां व्यापारः, तदधिष्ठानस्याध्यस्तता, तद्द्वारा आत्मनि व्यापृतत्वं वा, किं तावताऽनिष्टमापद्यते ? तत्रोत्तरम् - **न चैतस्मिन् सर्वस्मिन्नसत्यसङ्गस्यात्मनः प्रमातृत्वमुपपद्यते** । प्रमातृत्वं हि प्रमाणव्यापारयितृत्वम् । तच्चासङ्गस्यात्मनो नोपपद्यते स्वतः । असङ्गत्वं च द्वितीयसंसर्गायोग्यत्वम् । तच्चोपपादितमधस्तात् संक्षेपेणेति ।।

अथ प्रमातृत्वमपि मास्तु किं हीयते ? तत्राह - **न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति** । प्रमाणानि स्वविषयेषु प्रवर्तने स्वयमसमर्थानि प्रवर्तकं प्रमातारं काङ्क्षन्त इत्युक्तम् । अतो यमाश्रित्य तानि प्रवर्तेरन् स चेदात्मा प्रमातृत्वरहितः कृतं तत्प्रवृत्तिप्रत्याशयेत्यर्थः । न च देहमात्रमेवाऽलं प्रमातृत्वनिर्वाहाय । सुप्तदेहस्यापि प्रमाण-

व्यापारयितृत्वप्रसङ्गात् । तदेतत्सर्वमभिप्रेत्य संग्रहवाक्येऽभिहितम् - देहेन्द्रियादिष्वहंममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाण-प्रवृत्त्यनुपपत्तेरिति ।।

एतावता ग्रन्थेनेदमुपपादितम् - प्रामतृत्वान्यथानुपपत्तिः, प्रमाणप्रवृत्त्यन्यथानुपपत्तिश्च, प्रमाणानां सर्वेषामविद्यापुरस्सरत्वं बलादानयतीति । एवं च यदाक्षिप्तं कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानीति, तस्योक्तपरिहारत्वं मन्वान उपसंहरति - **"तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च"** इति । तस्मात् आध्यासिकप्रमातृत्वमाश्रित्यैव प्रमाणप्रवृत्तेरुपपत्तेः, अन्यथा चानुपपत्तेः, अविद्यावद्विषयाण्येव मिथ्याध्यासकर्तृव्यपेक्षाण्येव प्रत्यक्षादीनि प्रमाणानि । शास्त्राणि च तथैवेत्यवगन्तव्यम् । यथा हि लौकिकानि प्रमाणानि प्रमातारमन्तरेण न प्रवर्तितुमुत्सहन्ते, एवं शास्त्राण्यपि प्रमाणत्वाविशेषात् इत्यर्थः । अत्र विशेषस्तु वक्ष्यते ।।

ननु चैवं प्रमाता चाविद्यावांश्च, प्रमाणं चाविद्यापुरस्सरं चेति व्याहतवचनत्वमापतति । न हि दुष्टकरणस्य प्रमाजननसामर्थ्यम्, न वा तद्वान् प्रमाता स्यात् । बाढम् ।प्रमात्राश्रितत्वे सति प्रमाणकार्यविघातकस्य दोषत्वव्यवहारो विद्यत एव लोके । इयं तु देहेन्द्रियादिष्वहं-ममाभिमानलक्षणाऽविद्या प्रमातृत्वस्य प्रमाणप्रवृत्तेश्चोपयोगिनी न तु तद्विरोधिनी । अतो नासौ दोषः । अन्यादृशैव तु सा अविद्या यत्संबन्धेन प्रमातृत्वं प्रमाणत्वं वा विहन्यते । तद्यथा मयेदं प्रमेयं परिच्छेत्तव्यमिति यो न विजानति स न प्रमाता भवति । तथा यत् स्वविषयं न गृह्णाति संशयितं वा गृह्णाति विपरीतं वा, तादृशस्य नैव प्रमाणत्वं भवति । न तु तादृशीयमविद्या । तस्मादध्यासरूपाविद्यावद्विषयत्वे प्रमाणानां न कोऽपि दोषः ।।

यदप्युक्तम् - 'न च प्रमाणदोषस्तज्जनितज्ञाने मिथ्यात्वं वा प्रतीयते नियमेन । अतो न सर्वस्य प्रमाणस्याऽसमीचीनतेति । तत्र यद्ययमभिप्रायः - ज्ञानस्याऽप्रामाण्यकारणं दोषापरनाम्नी काचकामलादिरूपा करणशक्तिप्रतिबन्धकसामग्री । दुष्टकरणजनितं च ज्ञानमसमीचीनमिति । तत्र तथा नामास्तु । न हि वयं ज्ञाने समीचीनासमीचीनविभागो नास्त्येवेति वदितुं प्रवृत्ताः, किं तर्हि सर्वोऽप्ययं समीचीनामसमीचीनविभागव्यवहारो यथोपपादिताविद्या-पुरस्सर एवेति प्रतिपादयितुम् । ननु यद्यविद्याप्रयुक्तत्वाविशेषः सर्वत्र, कथं तर्हि प्रमाणज्ञानं समीचीनम्, अप्रमाणज्ञानं तु मिथ्येति व्यवहारः ? उच्यते । समर्थप्रवृत्तिप्रयोजकत्वतदभावकृतोऽयं विभागः । अतो नायं व्यवहारः पूर्वोक्ताविद्यापुरस्सरत्वं प्रमाणानामप-वदति । किं तु समर्थ प्रवृत्तिप्रयोजकत्वरूपं व्यावहारिक सत्यत्वं प्रमाणानामनुवदति । तच्चाभ्युपगम्यत एवास्माभिरपि । न हि वयं व्यावहारिकं सत्यत्वं प्रमाणानां प्रतिषेधामः, किं तु तात्त्विकम् । अतो न विरोधः ॥

नन्वेतदयुक्तम् । सत्यद्वयासंभवात् । आविद्यकं चेत् सत्यत्वं कथम् ? सत्यं चेत् तस्याऽऽविद्यकत्वमेव कथमिति न जानीमो वयम् । न ह्ययं सत्यशब्दस्तात्त्विकातात्त्विकयोः पदार्थयोः साधारणो भवितुमर्हति । तस्माद्यदि पारमार्थिकं सत्यत्वं नास्ति प्रमाण-प्रमेयव्यवहारस्य, तर्हि मिथ्यैव स इति वक्तव्यमिति चेत् । भावानभिज्ञो भवान् । न हि व्यावहारिकं सत्यमिति सत्यविशेषं ब्रूमः, किं तर्हि यत्सत्यमिति व्यवह्रियते प्रामाणिकैस्तन्निर्दिशामः । यथा ह्यसत्यमिति निश्चितेऽपि स्वप्नव्यवहारे तात्कालिकः सत्यमिथ्याविभागो दृश्यते न च स्वप्नसत्यं सत्यमेव भवति तावता । एवं व्यवहार-

सत्यमपि यावद्व्यवहारं सत्यत्वेन प्रथमानमपि पारमार्थिकं सत्यत्वं नालिङ्गते । उपवर्णिताध्यासमूलकत्वात् । वक्ष्यति हि भगवान् "नैष दोषः । सर्वव्यवहारणामेव प्राग् ब्रह्मात्मताविज्ञानात् सत्यत्त्वोपपत्तेः । स्वप्नव्यवहारस्येव प्राक् प्रबोधात् । यावद्धि न सत्यात्मैकत्वप्रतिपत्तिः, तावत् प्रमाणप्रमेयफललक्षणेषु विकारेष्वनृतत्वबुद्धिर्न कस्यचिदुत्पद्यते" (सू. भा. २-१-१४) इति । अतो न कश्चिद्विरोधः । एतेन "यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः' इत्याचार्यशबरस्वामिवचनं व्याख्यातम् । तस्य वचनस्यागन्तुकदोषविषयत्वात् व्यावहरिकबाधपरत्वाच्च नैसर्गिकाविद्याप्रत्ययनिषेधे तात्पर्याभावादिति सर्वं सुस्थम् ॥

४४. **पुरुषप्रवृत्तिनिरूपणेन प्रमाणादिव्यवहारस्याऽविद्यापुरस्सरत्वसमर्थनम्** - एवं तावत् प्रमाणप्रवृत्तिनिरूपणेन सर्वस्यापि व्यवहारस्याऽविद्यापुरस्सरत्वमुपपादितम् । अथेदानीं पुरुषप्रवृत्तिनिरूपणेनापि तदुपपादयितुकामो हेत्वन्तरमुपस्थापयति **'पश्वादिभिश्चाविशेषात्'** इति । सर्वस्यापि प्रमाणप्रमेयव्यवहारस्याऽविद्यापुरस्सरत्वमभ्युपगन्तव्यम्, अविद्यामन्तरेण प्रमातृत्वस्यैवासिद्धेरित्युक्तम् । अत्रेदमपरमाशङ्क्य परिह्रियते । स्यान्नामाविचारस्वभावे प्रेरितानां पृथग्जनानां प्रत्यक्षादिव्यवहारा अविद्यापुरस्सरा इति । न तावता विवेकिनामपि पुरुषाणां तादृशा एव व्यवहारा इति वदितुं शक्यते । दृष्टविरोधप्रसङ्गात् । न ह्यागमोपपत्तिभ्यां विदितात्मतत्त्वा न दृश्यन्त एव प्रत्यक्षादिना व्यवहरन्तः । न च परीक्षका अपि लौकिका इवाव्युत्पन्ना एव । येन तेषां शास्त्रप्रणयनपरोपदेशादिप्रवृत्तयोऽप्यविद्यापुरस्सरत्वेन निश्चीयेरन् । प्रमाणकुशला ह्याहुः

"पुरुषश्चतुर्धा भिद्यते प्रतिपन्नोऽप्रतिपन्नः संदिग्धो विपर्यस्तश्चेति । तत्र प्रतिपन्नः प्रतिपादयिता, इतरे सापेक्षाः सन्तः प्रतिपाद्याः । ते यदेन्द्रियार्थसन्निकर्षमपेक्षन्ते तदा प्रत्यक्षेण । यदा लिङ्गदर्शन-स्मृत्याद्यपक्षेन्ते तदानुमानेन । यदा पुनरुपदेशमपेक्षन्ते तदा शास्त्रं प्रवर्तते" (न्या. वा. १-१-१) इति । तत्र भवन्त्वप्रतिपन्नादीनां पुरुषाणां व्यवहारा अविद्यापुरःसराः । प्रतिपन्नानां तु व्यवहारैर्न तथा भवितव्यम् । अन्यथा जगदान्ध्यप्रसङ्गादिति ।।

अत्र समाधानम् । यत्तावदुच्यते न विवेकिनामप्यविद्यापुरस्सरा भवितुमर्हन्ति व्यवहारा इति । तत्रोक्तमेवास्माभिः प्रमातृत्वसामान्य-मात्मानात्मनोरितरेतराध्यासं विना न सिध्यतीति । अध्यास एवाविद्येति च । तेन विवेकिनामपि प्रमातृत्वं प्रमातृत्वमेवेति तेषामपि व्यवहारोऽ-विद्यापुरस्सर एवेत्यवगम्यते । अतस्तत्र न किंचिद्वक्तव्यमवशिष्यते । यत्पुनरुच्यते परीक्षकाणां शास्त्रप्रणयनादिप्रवृत्तयो नाप्रतिपन्नादि-व्यवहारतुल्या भवितुमर्हन्तीति । तत्र को वान्यथा ब्रूते ? न हि वयं प्रतिपन्नाप्रतिपन्नविभागमप्यवजानीमहे येनेत्थमुपालभ्येमहि । एतावत्तु ब्रूमः । सन्त्येव ते प्रतिपन्नाः प्रतिपादयितारश्च पुरुषाः । न तावता तेषां व्यवहारा अविद्यापुरस्सरत्वमतिलङ्घितुमलम् । अविद्यां विना व्यवहारप्रयोजकप्रमातृत्वस्यैवासिद्धेरिति । न च ते प्रति-पादयितारः प्रमातृत्वमपि मिथ्येति प्रतिपादयन्ति । तद्यावत्ते प्रमातृत्वमाध्यासिकमेव सदपि परमार्थसत्यं मन्यन्ते, तावत्तेषामपि व्यवहारा नोक्ताविद्यापुरस्सरत्वमतिवर्तन्ते इति न कोऽप्यत्र विशेषः ।।

## ४५. पुरुषव्यवहारस्य पश्वादिव्यवहारसाम्यप्रदर्शनम् -

[illegible]गम्यते । पश्वादिभिश्चाविशेषात् । चशब्दः पूर्वोक्तहेतु-

समुच्चयार्थः । पश्वादयः पशुपक्षिसरीसृपादयः । व्यवहारसमये पुरुषाणां सर्वेषामपि पश्वादिभिरविशेषादेतादृशाव्यवहारप्रयोजकानि प्रमाणान्यविद्यापुरस्सराण्येवेति निश्चीयत इत्यर्थः । कथं पुनः पुरुषाणामविशेषः पश्वादिभिः ? ते खलु पश्वादयोऽशनापिपासादिता अविवेकिनस्तात्कालिकमेव यत्किञ्चिदुपनतं परिगृह्य देहयात्रा-मतिवाहयन्ति । पुरुषाः पुनः प्रज्ञानेन संपन्नतमा विज्ञातं वदन्ति विज्ञातं पश्यन्ति च । लौकिके कुशलकर्मणि शास्त्रीये चाधिकृतास्त एव । व्युत्पन्नचित्तत्वात् । तत् केन सामान्यमुच्यते पुरुषाणां पश्वादिभिरिति ? अत्रोत्तरमाविष्कुर्वन् संग्रहवाक्यविवरणमारभते । **यथा हि पश्वादय** इति । पश्वादयो हि शब्दादिभिः शब्दस्पर्शरूप-रसगन्धैः श्रोत्रादीनां श्रोत्रत्वक्चक्षूरसनाघ्राणानां ज्ञानेन्द्रियाणां संबन्धे तत्तदिन्द्रियार्थसन्निकर्षे सति, शब्दादिविज्ञाने प्रतिकूले जाते 'अयं शब्दो मदनिष्टसाधनः' इत्यादिरूपे ज्ञाने समुत्पन्ने ततः शब्दादेर्निवर्तन्ते । अनुकूले जाते 'अयं शब्दो मदिष्टसाधनः' इत्यादि-रूपे ज्ञाने समुत्पन्ने तु प्रवर्तन्ते तादृशशब्दादौ । तत्र प्रतिकूलानु-कूलज्ञाने विशेषरूपेण समुदाहरति यथेत्यादिना । **यथा दण्डोद्यत-करं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति पलायितु-मारभन्ते** । तदेतत् प्रतिकूलज्ञाने समुत्पन्ने विषयान्निवर्तन्ते इत्य-स्योदाहरणम् । यथा च **हरिततृणपूर्णपाणिमुपलभ्य** घासस्येष्ट-साधनतामनुस्मृत्य नूनमयं मां चारयितुमिच्छतीति प्रत्याशया तं पुरुषविशेषं **प्रत्यभिमुखीभवन्ति** । तदेतत् अनुकूलज्ञाने समुत्पन्ने विषये प्रवर्तन्ते इत्यस्योदाहरणम् । ननु भवत्वेवं पश्वादीनां ये विवेकहीनाः, पुरुषेषु व्युत्पन्नचित्तेषु किमायातम् ? तत्राह - **एवं पुरुषा**

**अपि व्युत्पन्नचित्ता** इत्यादि । एषोऽत्राभिप्रायः । सत्यम्, व्युत्पन्नचित्ता विवेकिनो मनुष्याः, पश्वादयस्तु न तथेति । तथापि विवक्षितांशे दृष्टान्तदार्ष्टान्तिकयोर्नास्ति वैषम्यमिति । अथ कोऽयं विवक्षितांशः ? तदुच्यते । तेऽपि खलु व्युत्पन्नचित्ताः पुरुषाः **क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान् बलवत उपलभ्य ततो निवर्तन्ते** । क्रूरदृष्टित्वेऽपि केचित् प्रसन्नहृदया इत्यत उक्तम् 'आक्रोशतः खड्गोद्यतकरान्' इति । त्वामिदानीमेव निहनिष्यामीत्यादि साक्रोशं वदन्तो निशितायुधप्रोन्नतकराश्चेति निश्चितलिङ्गमिदं द्वयं प्रतिकूलोपनिपातशङ्कायाम् । तत्र केचित् क्रूरदृष्टय आक्रोशन्तः खड्गोद्यतकरा अपि दुर्बलत्वादुपेक्ष्या भवन्ति । तत्परिहारार्थं 'बलवत' इति । यत्र भयकारणं सुनिश्चितम्, ततोऽनिष्टानुमानम्, ततश्च निवृत्तिर्व्युत्पन्नचित्तानामपि पश्वादीनामिवेति भावः । **तद्विपरीतान्** सौम्यदृष्टित्वादियुतान् साधूनुपलभ्य तान् **प्रति प्रवर्तन्ते**, समुत्पन्नानुकूलविज्ञानत्वात् पश्वादिवदेव । **अतः समानः पश्वादिभिःपुरुषाणां प्रमाणप्रमेयव्यवहारः** । अतः यत्र प्रतिकूल-विज्ञानं ततो निवृत्तिः, यत्र त्वनुकूलविज्ञानं तत्र प्रवृत्तिः इति व्यवहारात् समान एव पश्वादिभिः सर्वेषां पुरुषाणां प्रमणप्रमेयव्यवहारः । प्रमाणोत्पन्नज्ञानेन प्रमेयेषु व्यवहारः समान एवोभयत्रापीत्यर्थः । अत्र व्यवहारशब्देनेष्टानिष्टप्राप्तिपरिहारार्थं प्रवृत्तिनिवृत्ती परिगृह्येते । पूर्वं प्रमाणप्रवृत्तिनिरूपणेनाविद्यापुरस्सरत्वं प्रमाणानामादर्शितम् । इदानीं तु प्रमाणविज्ञानकृतपुरुषप्रवृत्तिनिवृत्तिरूपव्यवहारनिरूपणेन तदेव दृढीक्रियते इति विशेषः ।।

## ४६. पुरुषव्यवहारस्याऽविद्यापुरस्सरत्वनिगमनम् .

तदेवमिष्टयोगचिकीर्षाऽनिष्टवियोगचिकीर्षा चेत्येतद्द्वयं साधारणं पुरुषाणां पश्वादिभिः । तत्रेष्टसाधनताविज्ञानं तत्र तत्र विषये प्रवृत्तौ प्रयोजकम्, अनिष्टसाधनताविज्ञानं च निवृत्तौ प्रयोजकम्, इत्येतदप्युभयसाधारणमित्युक्तम् । ततः किमिति ? अत आह -

**पश्वादीनां च प्रसिद्धोऽविवेकपुरस्सरः प्रत्यक्षादिव्यवहारः।**

न हि ते पश्वादयो विविच्यात्मानमनात्मानं च व्यवहरन्ति । नाप्यनुमानकुशलाः । किं तु स्वभावमात्रानुसारिणः स्वभावानुविद्ध-बुद्धिचातुर्यमात्रानुसारिणो वा । अत एव हि व्याघ्रगजभुजङ्ग-मादयोऽपि मनुष्यैः कथंचित् प्रलोभ्य भीषयित्वा वा बध्यन्ते स्वेच्छानुवर्तिनश्च क्रियन्ते इति सुप्रसिद्धमेतत् । अथ च ते प्रत्यक्षादिव्यवहारवन्तो दृश्यन्ते । तस्मान्न विवेकविज्ञानमपेक्ष्यते व्यवहारे किंतु प्रतिकूलानुकूलविज्ञानसमुत्पत्तिमात्रमिति सिद्धम् । तत्र यदुच्यते प्रमाणजनितत्वाद्विज्ञानस्य नाविद्यापुरस्सरत्वं व्यव-हारस्येति तन्न समीचीनमिति स्पष्टं भवति । दृश्यते हि प्रमाणजनितं विज्ञानं तत्कृतव्यवहारश्च संप्रतिपन्नाविवेकभावेष्वपि पश्वादिषु ।

**तत्सामान्यदर्शनाद्व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादि-व्यवहारस्तत्कालः समान इति निश्चीयते ।** तत्सामान्यं नाम तेन पश्वादिव्यवहारेण सामान्यम् । स्वेष्टानिष्टप्रेप्साजिहासे, तत्र तत्र तत्तत्साधनताविज्ञानोत्पत्तिः, ततस्तत्तत्साधनोपादनपूर्वकं तत्तत्प्राप्ति-परिहारयोः प्रवृत्तिनिर्वृत्ती चेत्येतद्धि सर्वं समानमुभयोरपि । तस्यास्य सामान्यस्य दर्शनात्, व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादि-व्यवहारस्तत्कालः समान इति निश्चीयते । तादृशप्रेप्साजिहासानिमित्त-

प्रवृत्तिनिवृत्तिकाल एव कालो यस्य प्रत्यक्षादिव्यवहारस्य सोऽयं पश्वादिभिः समानः पश्वादाविवाविवेकपुरस्सर एवेत्यवगम्यते । भवतु नाम विवेकज्ञानं पुरुषाणाम्, न तत्प्रत्यक्षादिव्यवहारोपयोगि । न हि पुरुषाणां व्यवहारे पश्वादिकृतव्यवहारात् कश्चिद्विशेषो दृश्यते तत्काले, यदुपपादकत्वेन व्यवहारकारणकोटौ विवेकज्ञानस्यापि प्रवेशः स्यादिति भावः । एवं च प्रत्यक्षादिव्यवहारान्तःपाति पुरुषप्रवृत्तिनिवृत्ती इष्टानिष्टसाधनविज्ञानमात्रपूर्विके चेष्टात्वात् पश्वादिचेष्टावदित्युक्तं भवति ॥

# ६. शास्त्रव्यवहारस्याप्यविद्या पुरस्सरत्वप्रदर्शनम्

**शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वाऽऽत्मनः परलोकसंबन्धमधिक्रियते । तथापि न वेदान्तवेद्यमशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमसंसार्यात्मतत्त्वमधिकारेऽपेक्ष्यते । अनुपयोगात्, अधिकारविरोधाच्च । प्राक्च तथाभूतात्मविज्ञानात् प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्तते । तथा हि 'ब्राह्मणो यजेत' इत्यादीनि शास्त्राण्यात्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते ॥**

**४७. ग्रन्थसंबन्धः** - सर्वेषां प्रमाणप्रमेयव्यवहाराणामविद्यापुरस्सरत्वं प्रतिज्ञातम् । तदुपपादनाय च तादृशव्यवहाराश्रयस्य प्रमातृत्वस्य देहेन्द्रियादिष्वहंममाभिमानपूर्वकत्वं दर्शितम् । प्रवृत्ति-निवृत्तिरूपव्यवहारे च पुरुषाणां विवेकिनां कृतबुद्धीनामपि पश्वादिभिः समानयोगक्षेमत्वात् तद्व्यवहारोऽप्यविवेकपुरस्सर एवेत्यवगमितम् । शास्त्रव्यवहारोऽपि च प्रमाणव्यवहारत्वादविद्यापुरस्सर एवेत्युक्तम् । अथेदानीमभ्यधिकविवक्षया शास्त्रीयव्यवहारं पुनरपि परीक्षणाय समादत्ते - **शास्त्रीये तु व्यवहारे** इत्यादिना ।।

**४८. शास्त्रीयव्यवहारविषयेऽभ्यधिका शङ्का** - तत्र 'शास्त्रीये तु व्यवहारे' इत्यारभ्य शङ्काग्रन्थः । 'तथापी'त्यारभ्य तु परिहारग्रन्थः । शङ्का तावत् पूर्वमेवोपवर्णिता । भवतु नाम लौकिक-व्यवहराणामविद्यापुरस्सरत्वम् । दृष्टार्थत्वात् । न हि दृष्टार्था प्रवृत्तिर्देहव्यतिरिक्तात्मज्ञा नमपेक्षते । शास्त्रीयेषु तु देहपातोत्तरकाल-फलेषु कर्मसु न व्यतिरिक्तात्मज्ञानं विना प्रवृत्तिरुपोपपद्यते । विद्वान् हि बुद्धिपूर्वकारी कर्मस्वधिक्रियते । स च नाविदित्वाऽऽत्मनः परलोक-संबन्धमधिक्रियेत । "स्वर्गकामो यजेत" इत्यादि श्रुतयो हि देहातिरिक्तं परलोकफलोपभोगयोग्यं कर्तारमन्तरेण न प्रामाण्यमश्नुवते । अतोऽस्त्यात्मा देहातिरिक्तो यः कर्मफलेन संबध्यते इति विदित्वैव हि बुद्धिमान् कर्मप्रारभते । यस्तु मन्यते नास्ति कश्चिदात्मा देहादिव्यतिरिक्तो यः पारलौकिकेन फलेन संबध्येतेति, नास्ति परलोक इति वा, स नैव कर्मस्वधिक्रियते यथा चार्वाकादिः । तत्कथमविद्वद्विषयः शास्त्रव्यवहार इत्याक्षेपः । अत्राऽविदित्वा परलोकसंबन्धमित्युप-लक्षणम् । जन्मान्तरसंबन्धमित्यपि द्रष्टव्यम् । जन्मान्तर-लोकान्तरेष्टा-

निष्टप्राप्तिपरिहारेपायोपदेशार्थं हि शास्त्रप्रवृत्तिरिति । यद्यपि चोदनामात्रं न भोक्तारमाक्षिपति, अतत्परत्वात् । तथापि फलभूतः स्वर्गादिरपि मन्त्रादिप्रामाण्यादवगम्यत एव शास्त्रेण, फलभोगोऽप्याक्षिपत्येव व्यतिरिक्तात्मानमित्यभिप्रायेण 'नाविदित्वात्मनः परलोकसम्बन्धमधि-क्रियत' इत्युक्तमित्यनवद्यम् । एतेन मोक्षशास्त्रस्याप्यविद्वद्विषयत्वनिषेधः कृत एव भवति । तत्रापि ह्यविदित्वात्मनो मोक्षसंबन्धं नाधिक्रियते कश्चिदिति समानम् । तस्मान्न कुत्राचिदपि शास्त्रीयव्यवहारस्या-विद्यावद्विषयत्वं संभवदुक्तिकमिति शङ्कितुरभिप्रायः ।।

४९. **उक्तशङ्कापरिहारः** - तदेतत् सर्वमङ्गीकृत्यैव शास्त्रीयव्यवहारस्याऽविद्यावद्विषयत्वं प्रदर्शयितुमारभते - तथापीत्यादिना 'प्रवर्तन्ते' इत्येतदन्तेन ग्रन्थेन । **तथापीति** । देहाद्यतिरिक्तज्ञानमङ्गीकृत्यापि दोषं वदाम इत्यर्थः । अत्रेदं वक्तव्यम् । किमिदमतिरिक्तात्मवेदनं नाम ? किं विधिप्रतिषेध-शास्त्रश्रवणान्यथानुपपत्त्या तादृशात्माभ्यूहमात्रम्, किं वा तादृशात्मन आपरोक्ष्यमिति । न तावदापरोक्ष्यम्, न हि 'अयं देहः', 'अयमात्मा' इति विविक्ताभ्यां प्रत्ययाभ्यां देहात्मानौ पश्यति कश्चिदित्युक्तं प्रागेव । तस्मादभ्यूहमात्रमेतदिति परिशिष्यते । तथा च यथा-प्रसिद्धमेवात्मानं कर्तारं भोक्तारं चाभ्युपगम्य तस्यैव च जन्मान्तर-लोकान्तरयोरिष्टानिष्टयोगं कथंचित् परिकल्प्यैव कर्मसु प्रवर्तते निवर्तते चेत्यापतति । तादृशश्चाधिकारी न विद्वानिति भवताप्यङ्गीकर्तव्यम् । न हि देहादिभिरयोगेऽहंप्रत्ययैक-साधनस्याऽऽत्मनः कर्तृत्वं संभवति । नापि देहसंबन्धं विना स्वर्गादिलोकगमनमुपपद्यते । नतरां स्वर्गादिलोकेषु जन्मान्तरेषु वा

देहमन्तरेणैवेष्टानिष्टविषयसंयोगस्तत्कृतसुखदुःखानुभवो वा भवेत्। तस्माद्व्यतिरिक्तात्मवेदनेऽपि कर्माधिकारार्थमेव देहाध्यासः समाश्रयणीयः। न च वाच्यं यस्येदं शरीरं तस्यैतद्द्वारापि सेत्स्यति कर्तृत्वं लोकान्तरगमनं भोक्तृत्वं चेति। यतो देहाध्यासं विना देहव्यापारेणाऽऽत्मनः कर्तृत्वभोक्तृत्वयोरसंभव एव। न चात्मीयत्वं सिद्धं देहस्य विनाध्यासम्। प्रतिवक्ष्यति चाग्रे वास्तविकं शरीरात्मनोः स्वस्वामिसंबन्धं भगवान् भाष्यकारः - "न ह्यात्मनः शरीरात्माभिमान-लक्षणं मिथ्याज्ञानं मुक्त्वान्यतः सशरीरत्वं शक्यं कल्पयितुम्' (सू.भा. १-१-४) इत्यादिना। तदेवमङ्गीकृतेऽप्यात्मनोऽहं-प्रत्ययगम्यत्वे न तादृशात्मवेदिनोऽपि देहाध्यासं विना कर्मस्वधिकारः सिध्यति। अतोऽविद्वद्विषयत्वमेव सर्वस्य शास्त्रीयव्यवहारस्येति तत्त्वम्। तथापि भवत्तोषार्थं ब्रूमः। अस्तु देहाध्यासं विनैव कर्मस्वधिक्रियते परलोकसंबद्धात्मज्ञानमात्रादिति। तथापि वेदान्त-प्रतिपाद्यात्मस्वरूपवेदनं तु नैवास्ति तस्य। तथा च शास्त्रीय-व्यवहारस्याप्यविद्वद्विषयत्वं यत्प्रतिज्ञातं तद्व्याहतमित्याह - **न वेदान्तवेद्यमित्यादिना ॥**

कः पुनरयमात्मस्वरूपविशेषो यमविद्वानेवाधिकारी शास्त्रीय-व्यवहारे ? ननु कृतविप्रणाशाकृताभ्यागमपरिहाराय कर्म-काण्डीयैरपि नित्यः पुमानङ्गीक्रियत एव। स च ज्ञानशक्तिस्वभावः। अन्यथा तस्य भोक्तृत्वासिद्धेः। सर्वगतश्च। अन्यथा देहान्तरप्राप्त्यसंभवात् इति हि तेऽङ्गीकुर्वन्ति। न चानुमान-गम्यमेवाऽऽत्मतत्त्वं तेषाम्। अहंप्रत्ययगम्यत्वेन मानसप्रत्यक्ष-गम्यत्वस्याप्युररीकरणात्। अतः किमवशिष्यते यदवेदनेनाविद्वान्

कर्मीति भण्यते ? तदुच्यते । अस्त्यात्मतत्त्वं वेदान्तैकवेद्यम् । ननु वेदान्तेष्वपि "आत्मनस्तु कामाय सर्वं प्रियं भवति" (बृ. २-४-५) इति संसारिणमेव प्रस्तुत्य "आत्मा वा अरे द्रष्टव्यः" (बृ. २-४-५) इत्युच्यते नाधिकं किमपि ? नैतदेवम् । तत्र हि बोध्यमान आत्मा **अशनायाद्यतीतः**, अशनाया पिपासा जरा मृत्युः शोको मोहश्चेत्येवमादयोऽशनायादयः । तानतीतः देहप्राणमनोधर्मवर्जित इत्यर्थः । "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" (बृ. ३-५-१) इत्यादिश्रुतिभ्यः । **अपेतब्रह्मक्षत्रादिभेदः** । ब्रह्मक्षत्रविड्ब्रह्मचारिगृहस्थवानप्रस्थभिक्षुत्वरूपा भेदा अपेता यस्मात्, सोऽयमात्मा अपेतब्रह्मक्षत्रादिभेदः । वर्णाश्रमभेदशून्य इत्यर्थः । "ब्रह्म तं परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेद" (बृ. २-४-६) इत्यादिश्रुतिभ्यः । अत एवायमसंसारी संसारधर्मवर्जितः, कर्तृत्वभोक्तृत्वरहित इत्यर्थः । "य आत्मा अपहतपाप्मा" (छां. ८-७-१) इत्यादिश्रुतिभ्यः । तदिदं **वेदान्तवेद्यमशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमसंसार्यात्मतत्त्वम्** । नन्वेतद्विशेषणपूगं वेदान्तोपदिष्टं कर्मशेषस्यैवाऽऽत्मनः स्तुतित्वेनोपयोक्ष्यते । आत्मास्तिताज्ञानस्य दार्ढ्याय हि वेदान्तवाक्यानां प्रवृत्तिरिति वदन्ति । तथा च **मीमांसकप्रकाण्डानां** वचनम् "कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते" (श्लो.वा.) इति । नेत्युच्यते । न ह्येतदात्मतत्वाधिकारेऽपेक्ष्यते । कुतः ? **अनुपयोगात्, अधिकारविरोधाच्च** । यद्विना हि यस्यानिर्वाहस्तस्य तदपेक्षेति युक्तम् । शास्त्रीयश्च व्यवहारो येनाकर्तृभोक्त्रात्मविज्ञानं न निर्वहति । अतस्तत्र तन्मात्रमपेक्ष्यत इति युक्तम् । न पुनरसंसार्यात्मज्ञानमप्यपेक्ष्यते । तस्य तत्रानुपयोगात् । न

केवलमनुपयोगात् । प्रत्युत विरोधाच्च । विरुध्यते हीदमकर्त्र-भोक्त्रात्मविज्ञानं सर्वथा कर्माधिकारविशेषणेन । अकर्ता कर्म करोत्य-भोक्ता च पारलौकिकफलेन संबध्यत इत्यतिस्फुटो व्याघातः । अतो न कर्मशेषज्ञानमिदम्, न वा स्तुतिः । अकर्मप्रकरणत्वात्, कर्माधिकार-भञ्जकत्वाच्चेति ज्ञेयम् । एतेनेदमप्यपास्तं यदाहुः कर्मलालसाः - उपासनार्थत्वादेषां वाक्यानामभ्युदयफलवत्त्वं निश्श्रेयसफलवत्त्वं च । "सोऽश्नुते सर्वान् कामान्" (तै. २-१), "स सर्वांगृंश्च लोकानाप्नोति" (छां. ८-७-१), "न च पुनरावर्तते" (छां. ८-१५-१) इत्यदृष्ट-फलश्रवणात् - इति । असंसार्यात्मतत्त्वज्ञानस्योपासनार्थत्वे मानाभावात्, अधिकारविरोधाच्च । न च वयमुपासनज्ञाना-नामभ्युदयार्थत्वं क्रमशो निश्श्रेयसार्थत्वं वा अवजानीमहे । वक्ष्यति हि भगवान् पुरस्तात् "तत्र कानिचिद्ब्रह्मण उपासनान्यभ्युदयार्थानि, कानिचित् क्रममुक्त्यर्थानि, कानिचित् कर्मसमृद्ध्यर्थानि" (सू.भा. १-१-१२) इति । असंसार्यात्मतत्त्वज्ञानं तु नोपासनासूपयुज्यते तदधिकारेण च विरुध्यत इत्येतावत् प्रतिपादयामः । तस्मात् साधूक्तं वेदान्तवेद्यमात्मतत्त्वं कर्माधिकारेऽपेक्ष्यत इति ॥

ननु च देहातिरिक्तकर्तृभोक्तृज्ञानमपि विद्यैव । तत् कथं तज्ज्ञानसहितः कर्मी स्यादविद्वान् ? तत्राह - **प्राक्च तथाभूतात्म-विज्ञानात् प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्तते ।** अयमर्थः । न वयं कर्मज्ञानं तदर्थमात्मज्ञानं वा कर्माधिकारकारण-मिहापवदाम इत्युक्तमेव । तादृशज्ञानं त्वध्यासलक्षणाविद्यान्तःपात्येव भवति । असङ्गस्याऽऽत्मनः स्वयं व्यापाराभावान्निष्क्रियत्वे सति कर्तृत्वभोक्तृत्वानुपपत्तेः । यत्त्वाहुः - आत्मा सत्तादिरूपाणां कर्मणां

स्वयंकर्ता भवति स्पन्दरूपकर्मसु च प्रयोजकत्वेनेति । तत्र सत्ता तावन्न क्रिया । तथा हि सति सत्ताक्रियामनिर्वर्तयतोऽसत्त्वप्रसङ्गः । सत्तानिर्वर्तनमपि दुर्निरूपम् । तस्य सत्ताव्यावृत्तत्वेऽसत्त्वापातात् । तद्रूपत्वे च क्रियैव कारकमित्यनिष्टापत्तेश्च । न च संकल्पादयः सन्त्यात्मन्यनध्यस्ता इति प्रागेव प्रतिपादितम् । तस्मात्सत्तादिक्रियया नात्मनः सक्रियत्वम्, नापि प्रयोजकत्वेन । अतोऽविद्यां विना न कथंचिदप्यात्मनः कर्तृत्वं भोक्तृत्वं वा सिध्यति । तस्मात् साधूक्तं तथाभूतात्मविज्ञानात् प्राक् प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्तत इति । तथाभूतोऽशनायाद्यतीतत्वादिधर्मा य आत्मा तस्य विज्ञानं यावन्नोत्पन्नं तावत्, यद्वा अतथाभूतकर्तृभोक्त्रात्मविज्ञानाद्विपरीतं सम्यग्विज्ञानं तथाभूतात्मविज्ञानं यावन्नोत्पन्नं तावत् प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं नातिक्रामतीत्यर्थः ॥

एवं तावत् परलोकसंबद्धात्मज्ञानस्वरूपसमालोचनेन शास्त्रीयव्यवहारस्याविद्यावद्विषयत्वमुपपादितम् । अथेदानीं विधिनिषेधशास्त्राक्षराञ्जस्यालोचनयाप्येतदुपपादयितुमाह - तथा हि 'ब्राह्मणो यजेत' इत्यादीनीत्यादि । अयमभिप्रायः । 'ब्राह्मणो यजेत' इतीदं शास्त्रं वर्णाध्यासमाश्रित्य प्रवृत्तम् । न ह्यनध्यस्तब्राह्मणभावोऽधिकारी स्यात्तत्र यागे । तथा "गृहस्थः सदृशीं भार्यां विन्देत्" इतिशास्त्रमाश्रमाध्यासमाश्रित्य ब्रह्मचार्यहं गृहस्थो भवेयमित्यध्यस्तब्रह्मचर्याश्रमित्वस्यैव विवाहकर्मणि प्रवृत्तेः । एवम् "अष्टवर्षं ब्राह्मणमुपनयीत" इति वयोध्यासं समाश्रित्य प्रवृत्तम् । "कृष्णकेशोऽग्नीनादधीत" इति चाऽवस्थाध्यासम् । एवमन्यान्यपि शास्त्राणि "यावज्जीवमग्निहोत्रं जुहोति" इत्येवमादीनि जीवनादितत्तदध्यासमाश्रित्यैव प्रवृत्तानीति द्रष्टव्यम् । न चैतानि वचनानि

ब्राह्मण्यादेः परमार्थसत्यतां प्रतिपादयितुं प्रवृत्तानि, किं तर्हि यथा-प्राप्तमेव ब्राह्मण्याद्यस्तित्वमुपादाय तत्तत्कर्म विदधति । अतो निर्दोषस्य शास्त्रस्य कथमविद्यावत्पुरुषाश्रयत्वम्, कथं वा अविद्या-प्रदर्शितक्रियाकारकफलबोधकत्वमिति शङ्काया नावसरः । एवं च शास्त्रीयव्यवहारस्याप्यविद्यावद्विषयत्वमित्यत्र न कोऽपि विरोधः ॥

एतेन मोक्षशास्त्राण्यप्यविद्यावद्विषयत्वेन व्याख्यातानि वेदितव्यानि । न हि प्रमात्रादिविभागं शास्त्रशिष्यादिविभागं वा अनाश्रित्य तेषां प्रवृत्तिरवकल्पते । अयं त्वत्र विशेषः । यद्यप्यविद्यावन्तमेव हितं शासति मोक्षवचनान्यपि, तथापि परमार्थात्मतत्त्वोपदेशेन सर्वानर्थ-हेतुभूतामविद्यां निश्शेषं निहत्यैव कृतार्थयन्त्यधिकारिणमिति ॥

**५०. अविद्या न प्रमाणगम्या, किं त्वनुभवैकगम्या -** अत्रैतच्चिन्त्यम् - अविद्यासद्भावे किं साधकमुक्तं भगवता भाष्य-कारेणेति । अर्थापत्त्यनुमानागमा इति केचित् । तत्र देहेन्द्रियादिष्वहं-ममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेरित्यर्था-पत्तिः, पश्वादिव्यवहारसामान्यदर्शनाद्व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारः समान इति निश्चीयते इत्यनुमानम् । तथा हि ब्राह्मणो यजेतेत्यादि शास्त्राण्यात्मनि वर्णाश्रमवयोऽवस्थादि-विशेषाध्यासमाश्रित्य प्रवर्तन्ते - इत्यागमश्च । इत्येवं प्रमाणत्रितय-मुदाहृतं पूज्यपादैरिति तेषामाशयः । इदं तु तैर्वक्तव्यम् प्रमाणानामविद्वद्विषयत्वं प्रतिज्ञाय तत्साधकत्वेन कथं प्रमाणान्येवोपन्यस्यन्त इति । न हि परीक्ष्यप्रमाणेभ्यो व्यतिरिक्तानि प्रमाणानि सन्ति यैस्तानि प्रमाणानि परीक्ष्येरन् तेषामविद्या-वद्विषयत्वं चाध्यवस्येत । अत्राऽऽह । तुलाप्रामाण्यवदेतद्भविष्यति ।

यथा हि तुला प्रमाणं सुवर्णादिगुरुद्रव्यविषये, तच्च द्रव्यं तुलान्तर-प्रतिपत्तौ । एवमिहाप्यध्याससद्भावसिद्धिः प्रमाणेभ्यः, ततः प्रमाणानां परीक्ष्यमाणानामध्यासपूर्वकत्वसिद्धिरिति स्यात् । नैतच्छक्यम् । वैषम्यात् । युक्तं तत्र यत् तुलाव्यक्तिभेदादेकया तुलया सुवर्ण-निर्धारणम्, ततः परं निर्धारितेन सुवर्णेन तुलान्तरनिर्धारणमिति । इह पुनरध्याससद्भावनिर्धारणार्थं यान्येव प्रमाणानि विनियुज्यन्ते तान्येवाध्यासपुरस्सरत्वेन निर्धारणीयानीति वैषम्यम् । तस्मान्न प्रमाणैरेव परीक्ष्यता संभवति प्रमाणानाम्, यथोक्तं **वार्तिककारैः** - "प्रमाणानां प्रमाणत्वं न स्वरूपप्रमेयता । न च मानान्तरादिष्टं तयोस्तुल्यस्वभावतः ।।" (बृ.वा. ४-४-३३९) इति ।।

ननु च यथा प्रमाणसत्तामनभ्युपगन्तृभिरपि वेदान्तिभिर्माध्यमिकैर्वा तदस्तित्वनास्तित्वानुसरणोदासीनैरेव प्रमाणापेक्षिणी कथा तदस्तित्वाभ्युपगन्तृभिर्वादिन्तैः सह प्रवर्त्यते, एवमेवेहापि भगवता अध्यासपुरस्सरत्वतदभावानुसरणोदासीनेनैव प्रथमं प्रमाणान्यादीयन्ते, ततश्च प्रमाणानि परीक्ष्य तत्पुरस्सरत्वं स्थाप्यते । तत्र को दोषः ? नेदमपीह घटते । यस्मात् प्रमात्रा प्रमाणानि प्रमेयपरिच्छित्तये समुपादीयन्ते न त्वात्मानं प्रमातुमिति स्थितिः । तथा च युक्तं तत्र यत्कथकाः प्रमेयपरीक्षणाय प्रमाणानि समुपाददत इति । इह पुनः प्रमाणानामविद्यापुरस्सरत्वं साधनीयम् । तच्च न साक्षात्, किं तु प्रमातृत्वघटकीभूताविद्यानिरूपणद्वारेति वैषम्यम् । न हि कश्चित् प्रमाता स्वात्मानमेव प्रमेयं परिकल्प्य स्वपरिच्छेदाय प्रमाणानि समुपादत्ते इति घटमानम् । अतो नायमपि पन्थाः । तस्मादर्था-पत्त्यादिप्रमाणैरविद्यासद्भावः साध्यत इति न सारवानयं पक्षः ।।

किमर्थं तर्हि प्रमातृत्वानुपपत्त्युदाहरणम्, पश्वादिव्यवहारोपन्यासो वेति ? अत्रोच्यते । नात्र प्रमाणोपन्यासः प्रकृतः, किन्त्वविद्यासद्भावप्रदर्शनम् । तथा हि ग्रन्थारम्भे विरुद्धस्वभावयोरात्मानात्मनोः परस्परतादात्म्याध्यासः परस्परताद्धर्म्याध्यासश्च मिथ्येति भवितुं युक्तम् इत्याशङ्क्य 'तथाप्यहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः' इत्यनुभवैकसिद्धत्वमध्यासस्य तत्प्रयुक्तव्यवहारस्य च प्रतिज्ञातम् । तस्या एव प्रतिज्ञायाः प्रपञ्चः प्रस्तुतः । तदर्थमेव चाध्यासलक्षणं प्रणीतम् । अविषयेऽप्यात्मनि विषयतद्धर्माणामध्यासः संभवतीत्युपपादितम् । अतः प्रतिज्ञातस्यैव विवरणार्थमिह सर्वोऽपि प्रमाणप्रमेयव्यवहारोऽध्यासपुरस्सर एवेत्यनुभवः प्रदर्श्यत इति प्रकृतार्थप्रपञ्च एवायम्, नाधिकं किंचित् । तत्र प्रमातृत्वविचारभाष्यग्रन्थस्यायमाशयः । प्रमातृत्वमेव तावद्देहेन्द्रियेष्वहंममाभिमानलक्षणाध्यासव्याप्तमिति सुप्रसिद्धमेतत् । ततश्च प्रमाणप्रमेयव्यवहारोऽध्यासपुरस्सर इति सेत्स्यति । अध्यासव्याप्तप्रमातृत्वप्रतिबद्धत्वात् प्रमाणप्रवृत्तेरिति । पशुव्यवहारभाष्यस्य चायमभिसन्धिः । पुरुषाणां प्रवृत्तिनिवृत्तिरूपव्यवहारः कर्तृत्वभोक्तृत्वाध्यासपूर्वक एव दृश्यते, अविवेकित्वेन संप्रतिपन्नपश्वादिव्यवहारवत् । यत्तु व्युत्पन्नचित्तत्वं पुरुषाणाम्, तस्य व्यवहारसमयेऽनुपयोगादनुभूतस्याध्यासपूर्वकत्वस्य न तदपवादकरमिति । शास्त्रोदाहरणभाष्यस्य पुनरिदमाकूतम् । सर्वाणि च शास्त्राणि शासनबोद्धारमध्यस्तसंसारिभावमेवाधिकारिणमपेक्षन्त इति प्रसिद्धमेवेति । तदेवं सर्वेषामपि लौकिकवैदिकव्यवहाराणामध्यासपुरस्सरत्वमनुभवसिद्धमेव प्रदर्श्यते न तु किंचित् प्रमाणैः प्रसाध्यते । एवं चेदमत्र विवक्षितं वेदान्तविद्यानिवर्त्याविद्या प्रमाणयुक्त्यसहाप्य-

नुभवैकगम्या न शक्याऽपह्नोतुमिति । अत एव **वार्तिककाराः** प्राहुः "अतः प्रमाणतोऽशक्याऽविद्याऽस्येति निरीक्षितुम् । कीदृशी वा कुतो वाऽसावनुभूत्येकरूपतः ॥" (सं.वा. १८४) इति । "प्रमाणोत्पन्नया दृष्ट्या योऽविद्यां द्रष्टुमिच्छति । दीपेनाऽसौ ध्रुवं पश्येद्गुहाकुक्षिगतं तमः ॥" (तै.वा. २-१७७) इति च । तस्माद्यथा प्रमाणम्, तथा प्रमाणप्रवृत्तेः प्रागेव सिद्धोऽध्यासोऽप्यनुभवैकगम्यः, न तु प्रमाणगम्य इत्येतदेव भाष्यकारहृदयमिति द्रष्टव्यम् ॥

## ७. अथाध्यासप्रकारप्रदर्शनभाष्यम्

**अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचाम । तद्यथा पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति । तथा देहधर्मान् 'स्थूलोऽहम्', 'कृशोऽहम्', 'गौरोऽहम्', 'तिष्ठामि', 'गच्छामि', 'लङ्घयामि' चेति । तथेन्द्रियधर्मान् 'मूकः', 'काणः', 'क्लीबः', 'बधिरः', 'अन्धोऽहम्' इति । तथान्तःकरणधर्मान् कामसंकल्पविचिकित्साध्यवसायादीन् । एवमहंप्रत्ययिनमशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यति ॥**

**५१. अध्यासलक्षणानुवादः** - अथेदानी यथोपवर्णिताध्यास-प्रकारान् प्रदर्शयितुकामः पूर्वोक्तमध्यासलक्षणं संक्षिप्यानुवदति - **"अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचाम ।"** योऽसौ युष्मदस्मत्प्रत्ययगोचरयोरन्योन्याध्यास इत्युक्तः, यश्च स्मृतिरूपः परत्र पूर्वदृष्टावभास इति लक्षितः, सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरतीत्यन्तेन ग्रन्थेन व्याख्यातश्च, सोऽतस्मिंस्तद्बुद्धिरूप एव । अतद्रूपे आत्मनि तद्रूपबुद्धिः अनात्मबुद्धिः । तद्विपर्ययेण चातद्रूपेऽनात्मनि तद्रूपबुद्धिरात्मबुद्धिरित्ययमेवाध्यासो नाम नान्य इत्यर्थः । एतेन स्मृतिरूप इत्यादिलक्षणेऽप्ययमेवाध्यासो लक्षितो नान्य इत्युक्तं भवति । स्मृतिरूपः पूर्वदृष्टः इति च विशेषणं तु लोकसिद्धशुक्तिरजताद्यध्यासोपपादनार्थम्, न प्रकृताध्यासलक्षण-शरीरप्रविष्टमपीत्युक्तं प्राक् । एतद्भाष्यवचनविरुद्धत्वादेव पूर्वोक्त-लक्षणेऽर्थाध्यासोऽपि संगृहीत इति, अध्याससामग्री प्रदर्शितेत्यादि च विकल्पयन्तोऽनादर्तव्याः । न हि भ्रान्तिबुद्धिव्यतिरेकेणाध्यासस्य रूपान्तरं शक्योपपादनम् । तथा च **गौडपादीयं वचः** "अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता । सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः" (मां.का. २-१७) इति । अत एव सकलमिथ्या-भेदनिर्वाहकत्वेनोपन्यस्तेऽस्मिन्नध्यासे मिथ्याशरीरे रूपभेदं कार्य-कारणत्वादिकं च कल्पयन्तो न्यायापेता इति बोध्यम् । न ह्यनध्यस्तः कश्चिदपि भेदः शक्यः शङ्कितुमपीति ।।

**५२. आत्मन्यनात्मधर्माणामध्यासप्रकाराः** - अथ कस्यार्थस्य कस्मिन्नध्यास इति प्रदर्शयितुमारभते सर्वस्यापि व्यवहार-स्याध्यासपुरस्सरत्वं दृढीकर्तुम् । बुद्ध्यारूढे ह्यध्यासरूपाविद्यायाः

संसारानर्थहेतुत्वे तन्निवृत्त्युपायान्वेषणा भवतीति । **"तद्यथा पुत्र-भार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति ।"** तत् अतस्मिंस्तद्बुद्धिरिति सामान्येनोक्तं यथा बुद्धिमारोहति तथा अध्यासविशेषान् प्रदर्शयिष्याम इत्यर्थः । पुत्रभार्यावित्तभृत्यपशुक्षेत्रादयो मम प्रत्ययग्राह्या बाह्यपदार्थाः, पुत्रभार्यादयः । त एते बाह्याः स्वदेहाद्बहिरेव लब्धसत्ताकत्वात्, आत्मप्रत्ययानर्हत्वेन सुप्रसिद्धाश्च । तेषां बाह्यानां तथाभूतानामपि ये धर्माः सकलत्वादयस्तानात्मन्येवाध्यस्यति, आत्मधर्मानिव प्रत्येतीत्यर्थः । सोऽयं गौणारोपः भेदापरोक्ष्ये सत्यपि तद्विस्मृत्य पुत्रादिष्वात्मभावारोपात्, तद्धर्माणामप्यात्मन्यारोपाच्च । पुत्रादिषु ममाभिमानप्रयुक्तोऽयमध्यासः । स्वपुत्रे केनचित् सत्कृते स्वात्मान-मेव सत्कृतं मन्यते, तत्कस्य हेतोः ? तस्मिन् ममाभिमानात् । एवं भार्यादिष्वपि द्रष्टव्यम् । सोऽयं ममाभिमानो देहताद्धर्म्याध्यास-पूर्वक एव भवति । देहतादात्म्यमापन्न एव हि तद्धर्मभूतं पुत्रादि-संबन्धमात्मन्यारोपयति ॥

अतो देहताद्धर्म्याध्यासं प्रदर्शयति **"तथा देहधर्मान् 'स्थूलोऽहम्', 'कृशोऽहम्', 'गौरोऽहम्', 'तिष्ठामि', 'गच्छामि', 'लङ्घयामि', चेति"** । यद्यपि 'अहं देहः' इत्याकारेण देहतादात्म्याध्यारोपो नास्ति, तथापि तद्धर्मभूतस्थौल्याद्यध्यारोप-स्तत्तादात्म्यमप्याक्षिपति । ततश्च तादात्म्याध्यारोपोऽपि सेत्स्यतीति ध्येयम् । ननु न कश्चिदध्यारोपोऽत्र दृश्यते । तिष्ठामि, गच्छामि, लङ्घयामि चेति सङ्कल्पपूर्वकं हि देहः स्पन्दते । अतो

यत्सङ्कल्पकृता या क्रिया सा तस्याऽऽत्मन एवेति न्याय्यम् । स्थूलोऽहमित्यादिस्तु गौणः प्रत्ययः । नैतत्सारम् । सङ्कल्पादेरप्यध्यस्तत्वात् । उपपादितं ह्येतत् सङ्कल्पादिकमप्यनध्यस्तं नास्त्येवेति । वक्ष्यते चोपरिष्टाद्यथा देहात्मप्रत्ययो गौणो न भवति तथा भाष्य एव । अतो न विरोधः ।।

**तथेन्द्रियधर्मान्** अध्यारोपयति । अत्रापि 'मूकोऽहम्', 'काणोऽहम्', 'क्लीबोऽहम्', 'बधिरोऽहम्', 'अन्धोऽहम्' - इति सर्वत्र धर्माध्यासोपन्यासेन तदाक्षिप्तो धर्मिभूतेन्द्रियतादात्म्यरूपोऽप्युपन्यस्त एव भवति ।।

यथा देहधर्मान् यथा वेन्द्रियधर्मान् **तथान्तःकरणधर्मान्** अध्यस्यति । श्रोत्रादीनि बुद्धीन्द्रियाणि वागादीनि कर्मेन्द्रियाणि बाह्यानि करणानि । बाह्यविषयज्ञाने साधनत्वात् । मनोबुद्ध्यादिसंज्ञितं तु करणं यद्यपि तत्रापि व्याप्रियते, तथापीन्द्रियद्वारैव तद्व्यापारो न स्वातन्त्र्येणेति न बहिःकरणताऽस्य । अन्तः सुखदुःखादिवेदने तु स्वातन्त्र्येण करणं भवतीत्यन्तःकरणमित्युच्यते । तस्य धर्माः कामादयः । तत्र कामो विषयाभिलाषः । सङ्कल्पः प्रत्युपस्थापितविषयकल्पनं शुक्लकृष्णादिभेदेन । विषये सम्यक्त्वकल्पनरूपाभिसन्धिर्वा । विचिकित्सा संशयः । अध्यवसायो निश्चयः । आदिशब्देन श्रद्धाधृतिर्ह्रीर्भीरित्यादिवृत्तयो गृह्यन्ते । तानेतान् कामादीनन्तःकरणधर्मान् स्वात्मन्यध्यस्यति । अहमेव कामये, सङ्कल्पयामि, विचिकित्सामि, अध्यवस्यामि चेत्यादिरूपेणाध्यारोपं करोतीत्यर्थः । अत्रापि कामाद्याश्रयान्तःकरणतादात्म्यारोपोऽप्युक्तो वेदितव्यः ।।

**५३. साक्ष्यहंप्रत्ययिनोरन्योन्याध्यासः** --तदेवमात्मन्यनात्म-

धर्माध्यासप्रकारान् प्रदर्श्येदानी सकलधर्माध्यासमूलमहंधर्म्यध्यास-मुपस्थापयति - **"एवमहंप्रत्ययिनमशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य"** इति । अहमिति प्रत्ययो यत्र सोऽयमहं प्रत्ययी, अहंप्रत्ययाश्रयो ज्ञातेत्यर्थः । सोऽयं कर्ता भोक्ता च व्यवहारे । अयमभिसन्धिः । सन्तु काममनात्मधर्माः कामादयः, तेषां दृश्यत्वे सति द्रष्टुधर्मत्वानुपपत्तेः । अहंरूपस्य तु प्रत्यगात्म-संबन्धितयैव प्रसिद्धेर्न युक्तमनात्मधर्मत्वमित्याशङ्क्येत । तामाशङ्कां परिहर्तुमिदमुच्यते । अहंरूपमप्यन्तःकरणधर्म एव, नात्मधर्म इति । अन्तःकरणं हि चित्सांनिध्यवशात् चिदिवाभास-मानमहंप्रत्ययाश्रयो भवति । एतदेव चाहंप्रत्ययालम्बनं भवति व्यवहारे, देहादिरप्येतदविवेकात् । इयांस्तु विशेषः । देहादिरिदंबुद्धिविषयोऽपि भवतीत्यनात्मतया सुविवेचनः । अहं-प्रत्ययी तु चिदाभासयुतोऽहङ्कारो बाह्यविषयापेक्षया प्रत्यक्त्वात् कुत्रचिदपि व्यवहारे इदंरूपेणाऽप्रतिभासमानत्वाच्च नात्मनः सकाशात् सुविवेचनः । अत एवाऽऽत्माहंप्रत्ययालम्बन एव ज्ञातेति, मानसप्रत्यक्षगम्य एवेति, स्मृतीच्छादिलिङ्गैरनुमेयश्चात्मेति च भ्रान्ताः केचित् परीक्षका अपि । तत्र स्मृतीच्छादयस्तावदन्तः करणधर्मा एवात्मन्यध्यस्ता इत्युपदर्शितं प्राक् । इदानीमहं-प्रत्ययित्वमप्यध्यस्तमेवेत्युच्यत इति विशेषः । सोऽयमहं-प्रत्ययिचिदात्मनोरितरेतराध्यासो न क्वचिदपि केवल एवानुभूयते, किंतूपवर्णितान्तःकरणेन्द्रियदेहादिधर्माध्याससहित एवेति स्थितिः । अत एवोक्तमस्माभिरहं स्थूल इत्यादिधर्माध्यासस्थलेऽपि धर्म्य-ध्यासोऽनुसन्धेय इति । तदेतत् सर्वमभिप्रेत्याह - एवमहंप्रत्ययिन मित्यादि ॥

नन्वहमर्थ एवात्मा भवतु, किमत्राहंप्रत्ययिनोऽप्यध्यासवर्णनेन ? तथा ह्ययमहंप्रत्ययी मामहं जानामीति प्रत्यक्षेणैवाहंप्रत्ययविषयतया सिद्धः । न चाहंप्रत्ययो व्यामोहः । बाधकाभावात् । अहंप्रत्यय-विषयत्वमप्यध्यस्तं ब्रुवाणोऽहं ब्रह्मास्मीति श्रुतिवचनमपि बाधितार्थ-विषयमेवेति ब्रूयात् । "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" इत्यात्मानमहंरूपेण परामृशन्तं श्रीकृष्णमपि योगीश्वरं भ्रान्तजनकोटौ विनिक्षिपेत् । अतः प्रत्यक्षविरुद्धं श्रुतिस्मृतिविरुद्धं चेदमध्यासवर्णनमिति चेत् । नैतत् साधूच्यते । एकस्यैव ज्ञानकर्मत्वं कर्तृत्वं चेत्यनुपपत्तेः । न च दृष्टत्वान्नानुपपत्तिरिति वाच्यम्, येन हि दृश्यते ज्ञात्रा न तस्यैव ज्ञेयता दृश्यते । यस्मिंश्चान्तःकरणेऽहंप्रत्ययविषयत्वं दृश्यते न तद्द्रष्टृ । न ह्यात्मैव युगपद्द्रष्टा दृश्यश्च भवतीति शक्यं कल्पयितुम् । द्रष्टुर्दृष्टेर्दृश्यविषयत्वात् । निरंशत्वाच्च द्रष्टुरात्मनः स्वविषयज्ञाना-श्रयत्वासिद्धिः । न च कदाचिद्द्रष्टुः स्वविषयेऽपि प्रमाणान्वेषणा भवति । सिद्धस्यैव हि द्रष्टुर्दृश्यविषयिणी दर्शनेच्छा संभवति । किं चाहंप्रत्ययी स्वभूतैर्बाह्यान्तरविषयकैः प्रत्ययैः सततं विक्रियते । आत्मा तु तेषां सर्वेषां विकाराणामपि सदैकरूपो द्रष्टेत्यनुभवसिद्धमेतत् । तदेवं दृश्यत्वेन द्रष्टृत्वेन च विकारित्वेन सदैकरूपत्वेन च भिन्नस्वभावयोस्तादात्म्यासंभवादाध्यासिक्येवाहंप्रत्ययालम्बनतेत्यव-गम्यते । न च नियमेनाहंतानुगमात् ताद्धर्म्यमात्मन इति शङ्क्यम् । सुषुप्त्यादावनन्वयादहमः । यस्तु तत्राप्यहमोऽस्तित्वमातिष्ठते तमनु-भव एव पराकरोतीति तं प्रति न किंचिद्वक्तव्यम् । 'सुखमहमस्वाप्सम्' इति परामर्शबलात् तत्र तत्सत्त्वमनुमिमानस्तु पिण्डमुत्सृज्य करं लेढीत्याभाणकविषयो भवेत् । न हि सुषुप्तावननुभूतं सुप्तोत्थितेन परामृष्टुं शक्यम् । न ह्यस्ति सुषुप्तेऽहमनुभवः न च कस्यचित्

कदाचिदभूत् भविष्यतीति वा कल्पयितुं शक्यम् । यथा हि न किंचिदवेदिषम् इति परामर्शबलात् किंचिच्छब्दवाच्यः कश्चन पदार्थः, तज्ज्ञानम्, तत्प्रतियोगिकाभावश्चेत्येतत् सर्व सुषुप्तावभूदिति नानुमीयते केनचिदमूढेन, एवं सुखमहमस्वाप्समिति परामर्शबलेनापि न सुषुप्तेऽहमनुभवोऽनुमीयते । परामर्शेऽहमुल्लेखस्तु जाग्रद्व्यवहारे आत्मनो नियमेनाहंप्रत्ययालम्बनत्वेनैव शक्यपरामर्शत्वनिबन्धन इति यत्किञ्चिदेतत् । एतेन न किंचिदवेदिषमित्यनिर्वचनीयं भावाज्ञानं परामृश्यत इति वदन्तो नवीनवेदान्तिनोऽपि परास्ता वेदितव्याः । अतः सुषुप्त्यादौ नास्त्यहमनुभव इत्येव सम्यक् । तस्मादपि नात्मा स्वभावत एवाहमर्थः, किंत्वहंप्रत्यय्यविवेकेनैव तथात्वेन प्रतीयत इति सिद्धम् । "अहं ब्रह्मास्मि", "अहं कृत्स्नस्य जगतः" - इत्यादयस्तु श्रुतिस्मृतिवादा अहंकारोपलक्षितमात्मानं भूतपूर्वगत्या गौणवृत्त्या वा परामृशन्तीत्यनवद्यम् । उक्तं हि **भगवत्पादैः** "इदमंशोऽहमित्यत्र त्याज्योऽनात्मेति पण्डितैः । अहं ब्रह्मेति शिष्टोंऽशो भूतपूर्वगतेर्भवेत्" (उप.सा. ६-७) इति । **वार्तिककारैश्च** - "प्रत्यक्त्वादतिसूक्ष्मत्वादात्मदृष्ट्यनुशीलनात् । अतो वृत्तीर्विहायान्या ह्यहंवृत्त्योपलक्ष्यते" (नै.सि. २-५५) इति । स्वव्यतिरिक्तसकलानात्मापेक्षया प्रत्यक्त्वात्, शब्दादिहीनत्वेनातीन्द्रियतया सूक्ष्मत्वात्, आत्मदृष्टिमनुरुध्य दृगिवावभासनाच्चाहङ्कारस्य प्रत्यगात्माऽहंवृत्त्यैवोपलक्ष्यते नान्याभिर्वृत्तिभिरिति वार्तिकार्थः । तस्मादहंप्रत्यय्यप्यध्यस्त एवेत्यत्र न कश्चन दोषातङ्कः ।।

अध्यस्तादहंप्रत्ययिनः सकाशाद्व्यतिरिक्तमधिष्ठानभूतमात्मानः स्वरूपं दर्शयति - **अशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्येति।** अशेषाः स्वस्याऽहंकृतः प्रचारा वृत्तिलक्षणा इच्छाद्वेषसुखदुःखाहंमम-

ज्ञानप्रभृतयः । तेषां यः साक्षी साक्षाद्द्रष्टा कूटस्थेन स्वरूपविज्ञानेनावभासयिता, तस्मिन् प्रत्यगात्मनि स्वापेक्षयापि प्रतीचि सर्वान्तरे स्वात्मनि चिदात्मके तत्तद्धर्मसहितमध्यस्येत्यर्थः । न हि केवलस्यैवाहमस्तद्विकाररहितस्याध्यासो भवति साक्षिणि क्वचित् । धर्माध्याससहितत्वाद्धर्म्यध्यासस्य । तत्राहमः शुद्ध एव साक्षिण्यध्यासः, धर्माणां त्वध्यस्ताहंतादात्म्ये तस्मिन्निति विशेषः ॥

· तदेवमात्मन्यनात्मधर्माध्यासं सप्रपञ्चं प्रदर्श्येदानीमनात्मन्यप्यतद्धर्माध्यास एवमेवानुसन्धेय इत्यतिदिशति - **तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यतीति** । तस्याऽहंप्रत्ययित्वाध्यासस्य वैपरीत्येन तं च प्रत्यगात्मानं मिथ्यैवास्मत्प्रत्ययगोचरत्वेन स्वीकृतं वस्तुतः सर्वसाक्षिणं सर्वेषामन्तःकरणप्रत्ययानां तद्गोचरीभूतानां देहादीनां च साक्षाद्द्रष्टारं प्रत्यग्रूपमपि सन्तं पराक्स्वभावेष्वन्तःकरणादिषु पुत्रभार्यादिपर्यन्तेषु बाह्येषु चाहंप्रत्ययिस्वरूपाभासविशेषेष्वध्यस्यति । आत्मनो यत्सत्यत्वम्, प्रत्यक्त्वम्, चिद्रूपत्वम्, आनन्दस्वरूपत्वं च तत्सर्वं तेष्वप्यध्यारोपयतीत्यर्थः ॥

**५४. भाष्योपात्तसर्वसाक्षित्वविशेषणकृत्यम्** - 'सर्वसाक्षिणम्' इति विशेषणेनाहंप्रत्यय्यादिषु यत् साक्षित्वमिव दृश्यते तदाध्यासिकमेव न वास्तवमित्युक्तं भवति । तेषां दर्शनाय करणापेक्षणात्साक्षाद्द्रष्टृत्वानुपपत्तेः । साक्षिद्वयानुपपत्तेश्च । न च साक्षिणोऽप्यध्यस्तत्वे सर्वमिथ्यात्वप्रसक्तेः शून्यवादप्रसङ्गः । अध्यस्तस्य साक्षित्वस्य मिथ्यात्वेऽपि पारमार्थिकस्य तस्याप्रच्युतेः । निस्साक्षिकस्याध्यासस्यैवासिद्धेः । शून्यस्यापि शून्यत्वसिद्धौ साक्ष्यपेक्षणाच्च । तस्मात् साक्षिणोऽध्यस्तत्वेऽपि भवत्येव तस्याव्यभि

चरितं सर्वानुभवरूपं सत्यं स्वरूपम् । अहंप्रत्यय्यादेस्तु साक्ष्यत्वे नैव सिद्धेः, विविधविकारभाक्त्वात्, सुषुप्त्यादौ स्वरूपव्यभिचाराच्चानृतत्वमित्यनवद्यम् ॥

अत्र केचित् प्रकारान्तरेणान्योन्याध्यासं समर्थयन्ति । कथम् ? एकतराध्यासे किलाऽन्यतरस्य सामान्यावभासोऽन्यतरस्यैव विशेषावभासश्च स्यात् । अत्र तु चिज्जडरूपेण द्वयोरपि विशेषावभासो द्वयोरप्यध्यासं गमयति । अध्यासे विशेषावभासस्याध्यस्यमानताप्रयुक्तत्वात् । न च द्वयोरपि मिथ्यात्वापातः । चेतनस्याचेतने संसृष्टतयैवाऽध्यासात् स्वरूपाध्यासाभावात् । न च विशेषावभासादधिष्ठानत्वविरोधः । अधिष्ठानधर्मतया विशेषस्याप्रतीतेः, अधिष्ठानान्तरधर्मतयैव प्रतीतेरिति । वयं तु पश्यामो नायं समीचीनो वाद इति । न ह्यधिष्ठानारोप्ययोः सामान्यविशेषभावेन प्रथनमध्यासे तन्त्रम् । अहमध्यासस्य निस्सामान्यविशेषाकारेणैव प्रथनादध्यासकाले । न च चेतनस्य संसृष्टतयैवाऽध्यासस्तत्र । न खलु 'संसृष्टचेतनोऽहम्' इति प्रत्येति कश्चित् । किं तु निरुपचरितं चेतनोऽहम् इत्येव प्रत्येति । न च सामान्यविशेषभावः सद्वितीयत्वं वा प्रत्यगात्मन्यस्ति वेदान्तिनये । सामान्यविशेषादेः सर्वस्यापि साक्ष्यत्वाभ्युपगमात् । न च कल्पितसामान्यविशेषभावमादायैवाऽध्यासनिर्वाह इति वाच्यम् । कल्पनस्यैवाऽध्यासत्वात् तेनैव तन्निर्वाहापातात् । अतः सामान्यविशेषावभासित्वादिकं कंचिदपि नियममनपेक्ष्यैव भवत्यात्मानात्मनोरध्यासः, युक्तिहीनावभासस्वरूपत्वात्तस्येति यथानुभवसिद्धेनैव संतोष्टव्यम् । सर्वसाक्षिणोऽप्यात्मनोऽन्तःकरणादिषु स्वरूपेणाध्यस्तत्वं स्वेन पारमार्थिकेन रूपेणावस्थानम् इति यथानुभवमेवाङ्गीकर्तव्यमित्यलमस्थाने युक्तिगवेषणेन ॥

यदप्याशङ्क्यते कैश्चित् - साक्षित्वं नाम साक्षाज्ज्ञातृत्वमेव । न ह्यजानतः साक्षित्वमस्ति । ज्ञातैव लोकवेदयोः साक्षीति व्यपदिश्यते । स्मरति च भगवान् पाणिनिः “साक्षाद्द्रष्टरि संज्ञायाम्” (पा.सू. ५-२-९१) इति साक्षाज्ज्ञातर्येव साक्षिशब्दम् । तस्मात् साक्षित्वादेवास्य ज्ञातृत्व्यं सेत्स्यतीत्यहमर्थ एवात्मा परमार्थतः । अतस्तस्याध्यस्तत्वं न युक्तमिति । तदप्यत्र 'सर्वसाक्षिणम्' इति सर्वग्रहणेनैवापास्तं भवति । ज्ञातुरपि साक्ष्यत्वात् सर्वसाक्षित्वानुपपत्तेः । **यथाहुर्वार्तिककाराः** - 'क्वचित् प्रमातृवित्साक्षी क्वचित्प्रत्ययवित् परः । क्वचिद्बाह्यार्थविच्चाऽऽत्मा तत्कर्तृत्वं निषिध्यते ।।'' (बृ.वा. २-१-३१५) इति । श्रुतिश्च साक्षिणः कर्तृत्वरहितामेव चिन्मात्रतां प्राह - “साक्षी चेता केवलो निर्गुणश्च” (श्वे. ६-११) इति । तस्मात्साक्षाद्द्रष्टरीति प्रत्ययस्मरणमन्यथैव व्याख्येयम् । 'सविता प्रकाशते' इत्यकर्तर्यपि कर्तृप्रत्ययोपचारदर्शनादिति द्रष्टव्यम् । अतः कर्तृप्रत्ययदर्शनमात्रादहमर्थतेति कुदर्शनमेतत् । तदेवं 'सर्वसाक्षिणि' इति विशेषणमेवाऽऽत्मनि सर्वाशिवसंपर्कं वारयतीति सर्वं शिवम् ।।

# ८. अथाध्यासविचारोपसंहारभाष्यम्

**एवमयमनादिरनन्तो नैसर्किगोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः ।।**

**५५. ग्रन्थसंबन्धः** - संक्षेपविस्तराभ्यां कथितमर्थमिदानी निगमयति - **एवमयमनादिरनन्तो नैसर्गिकोऽध्यास** इत्यादिना । उपक्रमवाक्ये 'लोकव्यवहारः' इति व्यवहारग्रहणं व्यपदेशप्रवृत्त्यादि-

रूपभेदस्याध्यासकार्यस्य संग्रहार्थम् । इह तु कर्तृत्वभोक्तृत्वप्रवर्तक इति तदेव कार्यं प्रदर्श्य तद्धेतुत्वेनाध्यासो वर्ण्यते । उभयत्राप्यध्यासः स्वप्रधान एव निर्दिश्यते ज्ञाननिवर्त्यत्वकथनार्थम् । अतो न प्रक्रमभङ्गः शङ्क्यः ॥

**५६. अध्यासविशेषणानां विवरणम्** - एवम् उपवर्णित-विधया । अयम् आत्मानात्मनोरितरेतराध्यासः । अनादिरनन्तश्च । कालाद्यनवच्छिन्न इत्यर्थः । कालादेरप्यध्यस्तत्वात् । नैसर्गिकोऽ-विचारस्वभावसिद्धः । न ह्यध्यासः प्रमाणसिद्धो भवितुमर्हति । तद्विनाश्यत्वात् । नाप्ययं स्वतःसिद्धः । तथात्वेऽस्याऽऽत्मवदेव निवृत्तिवैधुर्यप्रसङ्गात् । अतोऽयमविचारमात्रसिद्धः । स चायं मिथ्याप्रत्ययरूपः । यत्तदुक्तमुपन्यासकाले लोकव्यवहारनिमित्तत्वेन मिथ्याज्ञानमिति, सोऽयमध्यास एव नान्य इति ज्ञापनार्थमुच्यते 'मिथ्याप्रत्ययरूपः' इति । मिथ्याप्रत्ययः, अतस्मिंस्तत्प्रत्ययः । स एव रूपं यस्य सोऽयमध्यासो मिथ्याप्रत्ययरूपः । न ह्यध्यासेन समर्पितोऽर्थः कुत्रापि वर्तते येन स यथार्थप्रत्ययः स्यात् । न हि साद्यध्यासेऽपि 'इदं रजतम्' इत्याकारकं वस्तु शुक्तौ ततोऽन्यत्र वा कुत्रापि संभावितमस्ति । शुक्तौ हि रजतत्वं नास्ति, रजते चेदन्त्वं नास्ति । अन्यत्र चोभयं नास्तीति । एवं प्रकृतेऽपि 'अहं जानामि' इत्याकार-कस्य ज्ञातृत्वस्य कुत्रापि संभवो नास्तीति नासौ यथार्थः प्रत्ययः । न चायमप्रत्ययः, प्रतीतेरनुभवसिद्धत्वात् । नापि स्मृतिरेवेयम्, प्रत्यक्षावभासत्वात् । तस्मान्मिथ्याप्रत्ययरूप एवायमिति श्लिष्यते । **यथाहुर्वार्तिककाराः-** "मेयार्थानभिसंबन्धान्न यथावस्तुधीरियम् । ज्ञातत्वात्तदभावोऽपि प्रात्यक्ष्यान्नेष्यते स्मृतिः ॥" (बृ.वा. १-४-२७४) इति ॥

**५७. अध्यासस्यानाद्यनन्तत्वोपपादनम्** - ननु मिथ्याप्रत्ययमात्रस्याध्यासस्य कथमनादित्वमनन्तत्वं वा ? शुक्तिरजतादिप्रत्ययानां ह्यध्यासानां सादित्वमन्तवत्त्वं च दृष्टम् । नैष दोषः । शुक्त्यादिभिरिन्द्रियसंप्रयोगजं ज्ञानं कादाचित्कमेवेति युक्तं तत्राऽध्यासप्रत्ययस्यापि कादाचित्कत्वम् । इह पुनरहमनुभवस्य प्रत्यक्चैतन्याभासमात्रत्वादनादितैव युक्ता । न च सम्यग्ज्ञानस्यापि प्रत्यगाभासत्वात्सत्यमिथ्याज्ञानयोरैक्यप्रसङ्ग इति शङ्क्यम् । प्रत्यग्ज्ञानोदयात् प्राग्वस्त्वनुसारित्वतदभावाभ्यां तयोः सुविवेचनत्वात् । ज्ञानोदयाच्चोर्ध्वमुभयोरपि प्रत्यङ्मात्रत्वरूपेणैक्यस्येष्टत्वात् । **यथाहुर्वार्तिककाराः** - "अज्ञानं च तदुत्थं च ह्यात्मैवाज्ञाततत्त्वकः । तत्तत्त्वबोधात्तद्बाधः सर्परज्ज्वादिबाधवत् ।।" (बृ.वा. २-१-१७४) इति । "अज्ञानदित्रयं प्रत्यगाभासं यद्यपीष्यते । ज्ञानवज्ज्ञानसंभूतेनैव प्रागभ्युपेयते" (बृ.वा. ३-३-४१) इति च । तस्मादध्यासस्यापि सतोऽनादित्वं न विरुध्यते । यत्पुनः पत्यय व्यपदेश्यत्वं तस्य तत् 'प्रतीयतेऽनेन' इति व्युत्पत्या चैतन्यानुविद्धत्वेन चिद । भासत्वमभिप्रेत्य, न त्वन्तःकरणवृत्तित्वमभिपेत्येत्यविरोधः । किं च न वयमहमध्यासस्य प्रागभावादिवदनादिप्राक्कालवर्तित्वादनादित्वं ब्रूमहे, कथं तर्हि कालादेरप्यध्यास कार्यत्वात्कालकृतपरिच्छेदासंभवात् । यदप्युक्तं **वार्तिककारैः** - "तदेतन्नित्यमज्ञानं तज्जकालाद्यनाप्लुतेः । सर्वकालानुवर्त्येव लोके नित्यमितीर्यते" ।। (बृ. वा. १-४-३५८) इति । यस्य तु बन्धकारणमज्ञानं सहेतुकम् तस्य मोक्षप्रत्याशा दूरतो भवति । **यथोक्तम्** - "आगन्तु चेदिहाज्ञानमनिर्मोक्षः प्रसज्यते । पुरेवाऽनागतं भूयो नेष्यतीत्यत्र का प्रमा ।।" (बृ. वा. १-४-३६१) इति ।।

अत एव कालाद्यनाप्लुतेरध्यासस्य तत्कार्यस्य संसारस्य चानन्तत्त्वमप्युपपद्यते । अध्यासत्त्वादेव चास्य यावत् स्वापबाधकज्ञानोदयमनुवृत्तिः । अध्यासदृष्ट्यैव चानुवृत्तिबाधावपीत्यनन्तता ज्ञानेन बाधश्चेत्युभयमुपपद्यते । तथा हि **भगवान् सूत्रकारो** वक्ष्यति - "यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" (२-३-३०) इति । यद्यपि सुषुप्तिसमाध्यादिषु मिथ्याप्रत्ययसन्तानविच्छेद एव भवति वस्तुतः । तदपेक्षया च जीवस्य सत्संपत्तिः श्रूयते स्वापकाले - "सता सोम्य तदा संपन्नो भवति" (छां. ६-८-१) इति । तथाप्यविवेकिनां नैतत्तत्वं चित्तमारोहति । अत एव हि तास्ववस्थासु विषयानुभवाभावेन स्फुटतरप्रतिभासाभावेऽप्याप्रबोधमहमित्येवात्मा स्फुरतीति केषांचिन्मिथ्याग्रहः । तदेतद्वक्ष्यति **भगवान् भाष्यकारोऽपि** - "अपि च मिथ्याज्ञानपुरस्सरोऽयमात्मनो बुद्ध्युपाधिसंबन्धः । न च मिथ्याज्ञानस्य सम्यग्ज्ञानादन्यत्र निवृत्तिरस्तीत्यतो यावद्ब्रह्मानवबोधस्तावदयं बुद्ध्युपाधिसंबन्धो न शाम्यति" (भा. २-३-२०) इति । तदेवं मिथ्याप्रत्ययरूपत्वेऽपि कालाद्यपरिच्छेदात् प्रकृतस्याध्यासस्याऽनादित्वमनन्तत्वं च नानुपपन्नमिति स्थितम् ॥

## ५८. विशेषणत्रयस्यैकदेशिनां व्याख्यानं तन्निराकृतिश्च -

अत्र केचित् "पूर्वबुद्ध्यध्यासात् संस्काराद्यध्यासः, ततस्तादृगुत्तरबुद्ध्यास इति प्रवाहात्मना प्रवाह्युपादानजाड्यात्मना वा अनादित्वम्" इत्यनादित्वम्, "उपादानस्य मायाशक्तितया जडस्य चैतन्यसत्त्वानुबन्धित्वादधिष्ठानधीबाध्यत्वं सिद्धवत्कृत्य 'नैसर्गिक' इत्युक्तम्" इति नैसर्गिकत्वं चोपपाद्य मिथ्याधीहेतुत्वेन तादात्म्यमाह - "मिथ्येति" । कारणाध्यासो हि कार्याध्यासस्य हेतुरित्यध्यासस्य मिथ्याप्रत्ययत्व-

मित्यर्थः । लक्षणतस्तथा रूप्यते न प्रतीयत इति रूपग्रहणम् । मिथ्याप्रत्ययानां रूपमनिर्वाच्यत्वं यस्य स तथेत्यनिर्वाच्यत्वं वोच्यते । यद्वा मिथ्याभूताऽखण्डजडशक्तिस्तन्मात्रत्वेनाध्यासप्रत्ययो रूप्यते । न हि 'कारणादृते कार्यस्य रूपमस्ति' इति बहुधा विकल्प्य मिथ्याप्रत्ययरूपत्वं व्याचख्युः । अपरे तु "मिथ्या माया, तया प्रतीयत इति प्रत्ययः कार्यप्रपञ्चस्तत्प्रतीतिश्चेत्येवंस्वरूपः" इति मिथ्याप्रत्ययरूपत्वं वर्णयामासुः । तदेतत्सर्वं व्याख्यानजालं कार्यकारणाध्यास-द्वयनिराकरणेन, अनिर्वचनीयवस्तूत्पत्तिनिराकरणेन च निराकृतप्राय-मित्युपेक्ष्यते । यद्यप्यविवेकनिबन्धन एवाध्यास इति, "बीजाङ्कुरादि-वदविद्याकृतः संसार आत्मनि क्रियाकारकफलाध्यारोपलक्षण अनादिरनन्तोऽनर्थः" (बृ.भा. १-१-१) इति च ब्रुवता भाष्यकारेणापि कार्यकारणाविद्याद्वयमप्यङ्गीकृतमिव लक्ष्यते - "नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये" (२-१-१४) इति ब्रुवता अनिर्वचनीय-परिभाषा च । तथाप्यविद्याध्यासयोरुपादानोपादेयभावोऽ-विद्यापरिणामेनानिर्वचनीयज्ञानज्ञेययोर्जनिश्चाधुनातनवेदान्त्युपदिष्टो नैवाचार्याभीष्ट इति प्रागेवावेदितमित्यविरोधः । तस्मादनादिरनन्तो मिथ्याप्रत्ययरूप इत्यस्य यथाश्रुत एवार्थः, न कश्चिदपूर्वः कल्पनीय इत्यलं विस्तरेण ॥

**५९. अध्यासस्य कर्तृत्वभोक्तृत्वप्रवर्तकत्वम् -**

उक्ताध्यासस्यानर्थहेतुतामाविष्कर्तुं विशेषणम् - **कर्तृत्वभोक्तृत्व-प्रवर्तक** इति । उक्तमेतद्यथा ज्ञातृत्वमेव तावदध्यासप्रत्युपस्थापितमिति । तेन ज्ञानकर्तृत्ववत् सर्वक्रियाकर्तृत्वमप्याध्यासिकमित्युक्तमेव भवति । ज्ञानपूर्वकत्वात् सर्वासां क्रियाणाम् । ज्ञाता हि बाह्यवस्तुषु

शोभनाशोभनाध्यासपूर्वकं तत्रेच्छाद्वेषप्रयुक्तः क्रियासु प्रवर्तते । भोक्तृत्वं च सुखदुःखसंवेदनलक्षणमिच्छाद्वेषयोः सर्वानर्थकारणयोः प्रयोजकम् । तदपि भोक्तृत्वं देहेन्द्रियान्तःकरणवत एव विषयेषु प्रवृत्तस्योपपद्यत इत्याध्यासिकमेव । तदेवं कर्तृत्वभोक्तृत्वरूपमात्मनो न स्वाभाविकं यथाहुर्नैयायिकादयः । किं त्वात्मस्वरूपज्ञानाभावेनातद्रूपे तस्मिन्नध्यारोपितमेवेति तदपनयनेनैव संसारानर्थो हेयो नान्यथेत्यभिप्रायः । तथा च **वक्ष्यति** - "न चानभ्युपगम्यमाने ज्ञानगम्ये ब्रह्मात्मत्वे कर्तृत्वभोक्तृत्व-स्वभावस्याऽऽत्मनः कैवल्यमाकाङ्क्षितुं शक्यम् । अग्नौष्ण्यव-त्स्वभावस्याऽपरिहार्यत्वात्" (४-३-१४) इत्यादि ॥

**६०. अध्यासस्य सर्वानुभवसिद्धत्वम्** - सर्वलोकप्रत्यक्ष इत्यध्यासस्य सर्वानुभवसिद्धत्वात् तत्र प्रमाणान्वेषणा व्यर्थप्रयासेत्याह । अहंममेति व्यवहारो हि सर्वानुभवसिद्धः । स चाध्यासं विना नोपपद्यत इति दर्शितं प्राक् । तथा चेममध्यासं व्यपनेतुं शास्त्रप्रवृत्तिरवकल्पत इति भावः ॥

# ९. अथ मीमांसावतरणिकाभाष्यम्

**अस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते । यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः ॥**

**६१. अध्यासवर्णनं न शास्त्रसूत्रसंगतमिति शङ्का -**

स्यादेतत् । यदेतावत्पर्यन्तमुपवर्णितं संसारस्य मिथ्यात्वं तदेतन्न तावच्छास्त्रार्थः । सर्वस्यापि जगतः सत्यसंकल्पेन परमेश्वरेण निर्मितत्व-श्रवणात् संसारबन्धस्यापि तदन्तःपातित्वेन सत्यत्वावगमात् । न चायं सूत्रार्थः । अत्रापि "अथातो ब्रह्मजिज्ञासा", (१-१-१) "जन्माद्यस्य यतः" (१-१-२), "शास्त्रयोनित्वात्" (१-१-३) इति च जगत्कारणस्यैव ब्रह्मणः शास्त्रप्रमाणकत्वसंसूत्रणात्, अध्यासस्या-संसूत्रणाच्च । न च परमपुरुषार्थस्य ब्रह्मज्ञानैकसाध्यत्ववचनादेव ज्ञाननिबर्हणीयस्य संसारस्याध्यस्तत्वमप्युक्तकल्पमिति युक्तम् । सत्यस्यापि निगडबन्धादेः प्रभुप्रसादान्निवृत्तिदर्शनात् । बन्धविध्वंस-लक्षणायाश्च मुक्तेर्बन्धमिथ्यात्वानपेक्षणात् । ज्ञानमात्रेण सकल-बन्धविनाशे मुक्तिर्नान्यदपेक्षत इति ज्ञानसमकालमेव शरिरादिनिवृत्ति-प्रसङ्गाच्च । तस्माच्छास्त्रसूत्रासङ्गतमिदमध्यासवर्णनमिति ।।

**६२. अध्यासवर्णनस्य शास्त्रेण संगतिः** - तामेतां शङ्काम-पाकुर्वन्नध्यासवर्णनस्य संगतिमाह - **अस्यानर्थहेतोरित्यादिना** । अस्याविद्याख्यस्याध्यासस्य । अनर्थहेतोः क्रियाकारकफलभोगाभि-निवेशादिरूपसंसारनिदानस्य । प्रहाणायाऽऽत्यन्तिकनिवृत्तये । आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इत्यर्थः ।।

अयमभिसन्धिः । न तावच्छास्त्रासंगतिः । अध्यासाविद्ययोरेक-त्वेन शास्त्रोपदिष्टस्यैवाध्यासस्यात्रवर्णनात् । प्रसिद्धं तावत्सर्वेषु वेदान्तेषु विद्याविद्ययोर्विभागवचनं दृश्यतेऽत्यन्तं विरुद्धस्वभावयो रिति । "दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता" (क. २-१-४) इत्यादिश्रुतिभ्यः । तयोश्चाविद्या शोकभयादिकारण-त्वाद्धातव्या मुमुक्षुभिरिति श्राव्यते - "न चेदिहावेदीन्महती विनष्टिः'

(के. २-१३), "अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ।।" (क. १-२-५), "अथ तस्य भयं भवति । तत्त्वेव भयं विदुषोऽमन्वानस्य" (तै. २-७), "सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित् .... सोऽहं भगवः शोचामि ।।" (छां. ७-१-३), "स योऽत एकैकमुपास्ते न स वेदाऽऽकृत्स्नो ह्येषः" (बृ. १-४-७) इत्यादिश्रुतिभ्यः । तत्प्रहाणाय चाऽत्मैकत्वविद्यैवोपदिश्यते । "इह चेदवेदीदथ सत्यमस्ति" (के. २-१३), "देवं मत्वा धीरो हर्षशोकौ जहाति" (क. १-२-१२), "एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य" (मुं. २-१-१०), "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति" (तै. २-९), "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" (छां. ७-२६-२), "स एष नेति नेत्यात्मा .... अभयं वै जनक प्राप्तोऽसि" (बृ. ४-२-४) इत्यादिभिः श्रुतिभिः । तत्र येयमविद्या श्रूयते श्रुत्यन्तेषु साऽस्मादध्यासाद्यथावर्णितान्न व्यतिरिच्यते । न ह्यतोऽतिरिक्ता काचिदविद्या विद्याविनिवर्त्या संभाविताऽस्त्यनर्थहेतुः । दृष्टा च लोके रज्जुसर्पादिप्रत्ययरूपाविद्या भयाद्यनर्थकारिणी रज्जुज्ञानरूपया विद्यया विनिवर्त्यमाना । तत्सामान्यादिहाप्यात्माविद्याप्यध्यासरूपिण्येव भवितुमर्हति । न च स्वयंप्रकाशे प्रत्यगात्मन्यध्यारोपितप्रमातृत्वाद्यनर्थनिरासव्यतिरेकेण कृत्यान्तरं विद्याया अभ्यूहितमपि शक्यते । अध्यारोपदशायामपि स्वयंप्रकाशत्वादात्मनः, तस्मात् सर्वेषां वेदान्तानामात्मैकत्वविद्याप्रतिपत्त्यर्थमारम्भात्, विद्यायाश्चाविद्याव्यपनयनव्यतिरेकेण कृत्यान्तराभावात्, अध्यासव्यतिरेकेण चाविद्याया असंभावितत्वाच्चाध्यासवर्णनं शास्त्रसङ्गतमेवेति सिद्धम् ।।

यद्यपि ज्ञानाभावः संशयज्ञानं चाविद्याशब्दवाच्ये एव विद्यानिवर्त्ये च । तथापि कयाचित् प्रणाड्या विपरीतग्रहणरूपमध्यासमनन्तर्भाव्य तयोरनर्थहेतुत्वं नोपपद्यत इत्यध्यासमेव वेदान्ता अविद्यात्वेनोपदिशन्तीति वाचोयुक्तिर्भाष्यकाराणामिति ध्येयम् । उक्तं हि कण्ठरवेण ज्ञानाभावसंशययोरप्यविद्यात्वं **पूज्यपादैरन्यत्र** - "तामसो हि प्रत्यय आवरणात्मकत्वादविद्या विपरीतग्राहकः, संशयोपस्थापको वा, अग्रहणात्मको वा । विवेकप्रकाशाभावे तदभावात् ·। तामसे चावरणात्मके तिमिरादिदोषे सत्यग्रहणादेरविद्यात्रयस्योपलब्धेः" (गी.भा. १३-२) इति । अविद्यायास्त्रित्वं चेदमापातत एव । सङ्ख्याया अप्यविद्याकल्पितत्वात् । अत एकैवाविद्या रूपत्रयवत्त्वेनावभासते इति तत्त्वम् । **यथाहुर्वार्तिककाराः** - "अज्ञानं संशयत्वान्नो मिथ्याज्ञानात्तथैव च । तयोस्तत्त्वविवक्षायामज्ञानं तत्त्वमुच्यते ।।" (बृ.वा. १-४-४४०) इति । ज्ञानाभावस्यैव प्राधान्येन वर्णनं तु **वार्तिके** केवलं मिथ्याज्ञानस्यैव प्रमाणनिरस्यत्वं ब्रुवतां भाट्टानां दुराग्रहनिराकरणार्थमित्यन्यदेतत् । सर्वथाप्यध्यासवर्णनं शास्त्रसङ्गतमित्यलं प्रपञ्चेन ।।

**६३. अध्यासवर्णनस्य सूत्रेण सङ्गतिः** - सूत्रसङ्गतं चेदं वर्णनम् । "अथातो ब्रह्मजिज्ञासा" इति ज्ञाननिवर्त्यत्वेनाज्ञानस्य सूचितत्वात्, अध्यासातिरिक्तस्य चाज्ञानस्य नास्ति संभव इत्युपपादितत्वात्, "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" (२-३-२९) इत्यन्तःकरणगुणाध्यासकृतमेवाऽऽत्मनः संसारित्वं न स्वत इत्युद्घोषणाच्च । यत्पुनः "जन्माद्यस्य यतः", "शास्त्रयोनित्वात्" इति जगज्जन्मादिकारणस्यैव परमेश्वरस्य शास्त्रप्रमाणकत्वं सत्रितमिति ।

तत्र जन्मादेर्वास्तविकत्वसंसूत्रणाभावात्, "कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः" (१-४-१४) इति सत्यपि कार्यविषये विगाने प्रतिवेदान्तं कारणस्वरूपस्यैकरूपस्योक्तिरिति ब्रह्मस्वरूपमात्रे शास्त्रतात्पर्यकथनात्, "तदनन्यत्वमारम्भणशब्दादिभ्यः" (२-१-१४) इति कार्यस्य कारणेनानन्यत्वोक्तेः, कार्यमनपेक्ष्य ब्रह्मणि कारणत्वकल्पनाया असंभवात्, "तत्तु समन्वयात्" (१-१-४) इति च वेदान्तवाक्यानां तद्गतपदानां च ब्रह्मस्वरूपमात्रे समन्वयं ब्रुवता जगत्कारणत्वमपि तत्स्वरूपप्रविष्टत्वेन विवक्षितमिति वक्तुमयुक्तत्वात्, "अशब्दमस्पर्शम्" (क. १-३-१५), "स एष नेति नेत्यात्मा" (बृ. ४-२-४), "अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति" (२-३-६) इत्यादीनामध्यस्तसर्वविशेषनिषेधेनैव ब्रह्म निर्दिशतां वाक्यानां जगत्कारणत्वविशिष्टे समन्वय इति कल्पयितुमशक्यत्वात्,"तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ" (छां. ६-८-४) इति सृष्टिवाक्यानां ब्रह्मप्रतिपत्त्यर्थश्रवणाच्च जगत्कारणत्वमध्यारोप्य तदपवादेनैव ब्रह्म लक्षयितुमिष्टं सूत्रकारस्येत्यवगम्यते ।।

**६४. बन्धस्याऽनध्यस्तत्वे दोषाः** - यत्तु सत्यसंकल्पेन परमेश्वरेण निर्मितत्वात् सत्य एव संसारबन्ध इति । तदसत् । बन्धस्य स्वेन रूपेण सत्यत्वे मोक्षप्रत्याशाभावप्रसङ्गात् । सत्यसंसारस्रष्टुः परमेश्वरे वैषम्यनैर्घृण्यादिदोषप्रसङ्गाच्च । प्रत्यगात्मरूपेण तु सर्वस्यापि सत्यत्वमभ्युपेयत एवाऽस्माभिरपीति न कोऽपि दोषोऽस्मिन् पक्षे । "सत्यं चानृतं च सत्यमभवत्" (तै. २-६) इति सत्यसंकल्पस्यैव परमेश्वरस्य सत्यानृतोभयरूपेण विवर्तश्रवणाद् बन्धस्यानृतत्वेऽपि सत्यसंकल्पत्वस्याऽव्याहतेः ।।

एतेन यदाशङ्कितम् सत्यस्यापि निगडबन्धादेः प्रभु-प्रसादान्निवृत्तिदर्शनाद्बन्धविध्वंसलक्षणाया मुक्तेर्बन्धमिथ्यात्वं नापेक्ष्यत इति । तदपि प्रत्युक्तं भवति । विद्यामात्रनिवर्त्यस्याऽध्यस्तत्वावश्यं-भावात् । प्रभुप्रसादान्मुक्तबन्धस्याप्यपराधान्तरेण पुनरपि बन्धे निवारकाभावात्, प्रभुप्रसादोऽप्यविद्याध्यासनिरासद्वारैव बन्धं विध्वंसयितुमीष्टे नान्यथेति श्लिष्यते । उक्तं च भगवता - "ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इति, "तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" (गी. १०-१०, ११.) इति च ॥

यत्पुनराशङ्कितम् ज्ञानेनाध्यस्तबन्धविनाशे सति मुक्तिर्न किमप्यन्यदपेक्षत इति ज्ञानसमकाल एव शरीरादिनिवृत्तिः स्यादिति । तत्तुच्छम् । न ह्यनध्यस्तं शरीरमन्यद्वा किञ्चिदभ्युपगम्यतेऽस्माभिर्येन तन्निवृत्तिबिभीषिका स्यादर्थवती । वक्ष्यति च स्वयमेव भगवान् **भाष्यकारः** - "सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात्" (१-१-४) इति । तस्मात् सर्वथापि संगतमेवेदमध्यासवर्णनमित्यलं पल्लवितेन ॥

**६५. आत्मैकत्वविद्याप्रतिपत्तिविषये शङ्का** - इदमिदानीमपरमाशङ्क्यते । अविद्याप्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इति यदुक्तम् तन्नोपपद्यते । निर्विशेषचिन्मात्रज्ञानं हि विद्येष्यते भवता । न तु तत्र प्रमाणं किंचित् पश्यामः । प्रत्यक्षादीनां हि सर्वेषां सविशेषवस्तुन्येव प्रमाणभावः । शब्दस्य च विशेषेण सविशेषवस्तुन्येवाऽभिधानसामर्थ्यम् । प्रकृतिप्रत्यययोगात्मकस्य पदस्य विशिष्टार्थप्रतिपादकत्वस्याऽवर्जनीयत्वात् । पदसङ्घातरूपस्य वाक्यस्य चानेकपदार्थसंसर्गविशेषाभिधायित्वात् । यत्तूच्यते प्रत्यक्षादी-

नामविद्यापुरस्सरा प्रवृत्तिरिति । तत्परापशकुनाय स्वनासाच्छेदः क्रियते । शास्त्रस्याप्यविद्यापुरस्सरत्वेन प्रत्यक्षादितो विशेषाभावात् तस्याऽविद्यानिरसनसामर्थ्याभावप्रसङ्गात् । न हि भ्रान्तोऽयमिति परिज्ञातेन केनचित् 'नायं सर्पो मा भैषीः' इत्युक्तेऽपि भयनिवृत्तिर्भवेत् । न चाऽऽपाततः प्रमाणत्वेन स्वीकृतेन शास्त्रेण प्रत्यक्षादिविषयबाधे सति शास्त्रावगताद्वितीयात्मनो बाधाभावादेव परमार्थत्वमित्युत्थानं संभवति । निर्जनप्रदेशे वसतोऽज्ञातस्वतिमिरस्य जायमानद्विचन्द्रज्ञानस्येव शास्त्रीयज्ञानस्य बाधाभावेऽपि मिथ्यात्वातिक्रमणजङ्घालत्वासंभवात् ।।

अभ्युपगम्येदमुक्तम् । न तु निर्विशेषचिन्मात्रं वस्तु कुत्रचिदस्ति । चिद्गुणकं हि चिद्वस्त्विति सुप्रसिद्धम् । आत्मा हि चिद्रूपः । स्वस्मै स्वयंप्रकाशमानत्वात् । चिद्गुणस्तु तत्संबन्धाधीनतया तं प्रति प्रकाशत इत्यतो न स्वयंप्रकाशः । संविदनुभवज्ञानादिशब्दाः खलु चिद्गुणवाचकाः संबन्धिशब्दत्वात्तत्कर्तारं कर्म चानपेक्ष्य न प्रयुज्यन्ते । अतः स्वयंप्रकाशोऽयमात्मा ज्ञातैव न ज्ञानमात्रम् । न च ज्ञानगुणेनाऽस्य विकारः शक्यशङ्कः । ज्ञानगुणस्य नित्यत्वात् । सुषुप्तिमूर्छादावपि सदेव गुणभूतं ज्ञानं कर्मणा सङ्कुचितमनभिव्यक्तं जागरादौ विकसितमभिव्यज्यत इत्यविरोधः । तदेवं चिन्मात्ररूपं वस्तु न विद्यते यद्विषयिणी विद्या विधीयेत ।।

न चात्मनां नानात्वेन प्रसिद्धानामेकत्वं प्रतिपादयितुमर्हन्ति वेदान्ताः । नतरामात्मब्रह्मणोरेकत्वम् । आदित्यादिजीवेभ्यो हि भेदः स्फुटं व्यपदिश्यते ब्रह्मणः **श्रुत्यन्तेषु** - "य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति" (बृ. ३-७-९), "य आत्मनि तिष्ठन्" (बृ.मा. ३-७-२२) इति । **सूत्रे** च -

"अधिकं तु भेदनिर्देशात्" (२-१-२२), "अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्" (३-४-८) इति । तस्माद्भेद एव जीवानां परस्परं परमात्मनः सकाशादपीति युक्तम् । "परमं साम्यमुपैति" (मुं. ३-१-३), "मम साधर्म्यमागताः" (गी. १४-२) इति तु ब्रह्मप्रकारभूतस्यैव प्रत्यगात्मनः स्वरूपं तत्सममिति देवादिप्राकृतरूपप्रहाणेन ब्रह्मसमानशुद्धिप्रतिपादनपरमित्यन्यदेतत् । अतोऽयुक्तमिदमुच्यते "आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते" इतीति ।।

**६६. आत्मैकत्वे शास्त्रप्रामाण्यम्** - अत्राभिधीयते । नैषा साध्वी शङ्का । स्वतःसिद्धानुभवमात्रत्वादैकात्म्यस्य । यत्तावदाशङ्क्यते निर्विशेषचिन्मात्रे प्रमाणं न पश्याम इति । न तेन किञ्चिदनिष्टमापद्यतेऽस्माकम् । न हि वयं प्रमाणबलेनैकात्म्यं प्रतिपद्यामहे । किं तु स्वतःसिद्धमेवैकात्म्यं शास्त्रेणोपदिश्यत इति । "एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् । विरजः पर आकाशादज आत्मा महान् ध्रुवः ।।" (बृ. ४-४-२०) इत्यप्रमेयताश्रवणात् । अप्रमेयत्वे कथं तत्प्रतिपत्तिः, कथं वा तदर्थं वेदान्तारम्भ इति चेत् । शृणु । प्रमाणप्रमेयविभागाद्यनात्माध्यासनिरसनेनैव तत्प्रतिपत्तिः । तन्निरासायैव च वेदान्तारम्भः । एतेन निर्विशेषवस्त्वभिधायित्वं कथं वेदान्तवाक्यानामित्याक्षेपोऽपि निरस्तो भवति । न ह्यभिधानाभिधेयलक्षणवाक्यधर्माङ्गीकारेण शास्त्रमात्मानं ज्ञापयतीत्यभ्युपगच्छामो वयम् । वक्ष्यति हि भगवान् **भाष्यकारः** - "अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेत् । न । अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य" (१-१-४) इति ।।

यत्त्वाशङ्क्यते शास्त्रस्याप्यविद्यापरस्परत्वाविशेषात कथम-

विद्यानिरसनसामर्थ्यमिति । नैष दोषः । दृष्टत्वात् । दृश्यते हि कल्पितस्य कल्पितान्तरेण बाधो लोके । यथा रज्जुज्ञानेन रज्जुसर्पबाधः, रज्जुकारणज्ञानेन च रज्जुबाधः । यथा वा जागरितत्वेन कल्पितेन स्वप्नेन तदन्तर्गतस्वप्नान्तरबाधः । एवं शास्त्रोक्तात्मैक्यज्ञानेन कल्पितद्वैतबाधे न किंचिदनुपपत्तिः । यथोक्तं **वार्तिककारैः** - "क्लृप्तानामपि रज्ज्वादौ कल्पितान्तरसंश्रयात् । क्लृप्तान्तरापनुत्तिः स्याद्यथा तद्वदिहात्मनि ।।" (२-१-१७५) इति ।।

न चास्ति शास्त्रज्ञानबाधकम् । ननु बाधाभावेऽपि निर्जन-प्रदेशस्थिततैमिरिकज्ञानवन्मिथ्या स्यादित्युक्तम् । न । वैषम्यात् । युक्तं तत्र ज्ञातृत्वस्यानुवृत्तेर्द्वैतज्ञानस्याऽबाधितत्वाच्चन्द्रद्वित्वज्ञानस्य शङ्कित-मिथ्यात्वम्, मिथ्यात्वसंशयो वा । इह पुनः शास्त्रेण ज्ञातृत्वस्यैवा-पनोदनात् प्रमाणप्रमेयव्यवहारस्यैवापबाधे सति न काचिच्छङ्का शक्यतेकल्पयितुमपि । यथा **वक्ष्यति भगवान्** - "सति ह्यन्य-स्मिन्नवशिष्यमाणेऽर्थ आकाङ्क्षा स्यात् । न त्वात्मैकत्वव्यतिरेकेणाऽव-शिष्यमाणोऽन्योऽर्थोऽस्ति य आकाङ्क्षेत" (२-१-१४) इति ।।

यदप्याशङ्क्यते शास्त्रस्याप्यविद्यापुरस्सरत्वेन प्रत्यक्षादितो विशेषाभावात् तस्याऽविद्यानिरसनसामर्थ्याभावप्रसङ्गः स्यात्, भ्रान्ति-त्वेनावगतपुरुषकृतसर्पनिषेधवचनस्येवेति । तदसत् । वैषम्यात् । तत्र हि श्रवणकाले एव भ्रान्तत्वावगतिरस्तीति नार्थकरत्वमिति युक्तम् । इह पुनः प्राक् प्रबोधात् 'नेदं शास्त्रम्', 'न प्रमाणम्' - इति वा नास्ति बुद्धिरिति श्रवणादिप्रवृत्तौ नास्ति प्रतिबन्धः । अतो नास्ति शास्त्रस्याऽविद्यानिरसनसामर्थ्यविघटकम् । प्रबोधादूर्ध्वं तु मिथ्या-बुद्धित्वमनर्थकरत्वं वा न विद्यते पुरुषार्थपर्यवसायित्वात् । **तदुक्तम्** -

"ऐकात्म्यप्रतिपत्तेः प्राङ् न मिथ्याहेत्वभावतः । पुरुषार्था-वसायित्वान्नाप्यूर्ध्वमनपेक्षतः ।।" (सं.वा. ८९५) इति । ननु यद्यपि प्रबोधादूर्ध्वं जिज्ञासोः कृतार्थत्वात्पुनरप्युपायापेक्षा नास्ति । तथापि शास्त्रस्य सत्यत्वं तावद्धीयत एव । शास्त्रस्याप्यशास्त्रत्वेन ज्ञानात्, तादृशज्ञानानुदये वा द्वैतबुद्धेस्तदवस्थत्वादिति चेत् । न । इष्टत्वात् । इष्यते हि शास्त्रस्याशास्त्रत्वं प्रबोधे । तथा च **वक्ष्यति** - "अत्र पिताऽपिता भवतीत्युपक्रम्य 'वेदा अवेदाः' (बृ. ४-३-२२) इति वचनादिष्यत एवास्माभिः श्रुतेरप्यभावः प्रबोधे" (४-१-३) इति । प्रबुद्धपुरुषं प्रति च शास्त्रस्याऽप्रमाणीभावो न दोषाय । प्रमेयाधिगमे सति पुनरपि प्रमाणान्वेषणाभावात् । यथोक्तं **गीताभाष्ये** - "न ह्यात्मस्वरूपाधिगमे सति पुनः प्रमाणप्रमेयव्यवहारः संभवति । प्रमातृत्वं ह्यात्मनो निवर्तयत्यन्त्यं प्रमाणम् । निवर्तयदेव चाप्रमाणीभवति स्वप्न-कालप्रमाणमिव प्रबोधे । लोके च वस्त्वधिगमे प्रवृत्तिहेतुत्वादर्शनात् प्रमाणस्य ।" (गी.भा. २-६९) इति । अतो नायमपि दोषः ।।

**६७. चिन्मात्रवस्तुसिद्धिः** - यत्तूच्यते चिन्मात्रं वस्तु नास्त्येव । संविदनुभवज्ञानादिशब्दानामात्मगुणवाचकत्वात् । ज्ञातुरप्यात्मनो न विकारित्वम्, ज्ञानगुणस्य नित्यत्वादिति । तज्ज्ञातृत्वस्याऽध्यासपूर्व-कत्ववर्णनेनैव परिहृतप्रायम् । गुणगुणिनोश्चितोर्भेदानिरूपणात् । निरूपणे वा चिद्भिन्नस्य जडत्वात्तद्धर्मत्वानुपपत्तेः । तत्स्वरूपस्यैव भेदत्वे गुणगुणिनोरपि स्वरूपेणैक्यप्रसङ्गात् । गुणभूतस्य ज्ञानस्य दीपप्रभादिवत् संकोचविकासादिः स्वत एवेत्यङ्गीकारे साव-यवत्वानित्यत्वादिदोषप्रसक्तेः, परत इत्यङ्गीकारे चाध्यासवाद-स्वीकारप्रसङ्गादयुक्तोऽयं चिद्गुणकचिद्रूपात्मवादः । ज्ञातुरन्यस्य

तस्याप्यात्मभूतस्य साक्षिणोऽप्रत्याख्येयस्वभावत्वादेव च चिन्मात्र-वादस्य निर्दोषता । न हि साक्षिणं विना जागरितस्वप्नयोः प्रमात्रादयः प्रसिध्यन्ति । न च सुषुप्ते तेषां भावः । न चावस्थाप्रमातृ-प्रमाणादिभिरेवास्त्वात्मनः सविशेषतेति शङ्कनीयम् । तेषामपि साक्षित्वादात्मनः । अध्यस्तेन साक्ष्येणाणुमात्रमप्यधिष्ठानभूतः साक्षी न संबध्यत इत्युपपादितत्वाच्च । **तदाहुर्वार्तिककारा** अपि - "बोधादेव प्रसिध्यन्ति कालावस्थादयो यतः । मातृमानादयश्चापि कुतस्तैरस्य विक्रिया ॥" (सं.वा. ९९९) इति ॥

**६८. आत्मैकत्वसिद्धिः** - यत्पुनराशङ्क्यते नात्मैकत्वं ब्रह्मात्मनोरैक्यं वा प्रतिपादयितुमर्हन्ति वेदान्ताः । जीवनानात्वस्य सुप्रसिद्धत्वात् । आदित्यादिजीवेभ्यः परमात्मभेदस्य स्फुटं श्रवणाच्चेति । तदतीव मन्दम् । आत्मनानात्वस्य लोकसिद्धस्यैव श्रुतावनुवादात्, "आत्मैवेदं सर्वम्" (छां. ७-२६-१) इत्येकत्वावधारणात्, "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" (बृ. ४-५-१५) इत्यात्मैकत्वदशायां भेददर्शनापवादात्, "परेऽव्यये सर्व एकी भवन्ति" (मुं. ३-२-७), "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" (मुं. ३-२-९), "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" (गी. १३-२) इत्यादिवचनैरेकार्थवत्त्वाय परमसाम्यसाधर्म्यवचनयोरात्मैक्यपरतयैव योजयितुं युक्तत्वाच्च । तस्मात् साधूक्तमेवैतत् "अस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त" इतीति सर्वमवदातम् ॥

**६९. सर्ववेदान्तानामप्यात्मैकत्वपरत्वे शङ्का** - नन्वस्तु कतिपयानां वेदान्तवाक्यानामैक्यप्रतिपादकत्वमपि । तथापि न सर्वेषां

वेदान्तानां तत्परत्वमध्यवसातुं युज्यते । तथा हि वादिनः केचित् - आत्मनः कर्तृत्वात् कर्मशेषत्वम्, अतो ज्ञानस्यापि कर्मसंबन्धित्वमिति मन्यन्ते । आत्मवाक्यानां तु कर्तृप्रशंसापरत्वमेवेति च । निरतिशयसुखवाचित्वात्स्वर्गशब्दस्य न स्वर्गातिरिक्तो मोक्षोऽस्तीत्यत आत्मज्ञाने फलश्रुतिरर्थवाद इति च तेषामाशयः । मोक्षस्याऽऽत्मस्वरूपावस्थानलक्षणत्वेऽपि काम्यप्रतिषिद्धवर्जनपूर्वकं नित्यकर्मानुष्ठानादेव स सेत्स्यतीत्येके । अन्ये तु "तेषां सर्वेषु लोकेषु कामचारो भवति" (छां. ८-४-३) इत्यादिश्रुतिप्रामाण्यार्थमुपासनासंज्ञितं ज्ञानमप्यस्ति परलोकभोगफलकम् । न तु कर्तृत्वाद्यध्यासनिर्बर्हि ज्ञानं वेदोक्तमस्तीत्याहुः । अपरे तु यद्यप्यद्वैतात्मप्रतिपादकानि वाक्यानि सन्ति वेदान्तेषु, तथापि तेषाम् "आत्मा वा अरे द्रष्टव्यः" (बृ. २-४-५) इत्यादिवाक्यविहितोपासनापेक्षितोपास्यस्वरूपसमर्पणे विनियोग इत्याहुः । तदुपासनादेव चाविद्यानिवृत्तिः शरीरपातोत्तरकालं कैवल्यं वा भविष्यतीति तेषामभिप्रायः । अन्ये पुनरनात्मप्रपञ्चप्रविलयविधानपरत्वम्, अपरे च तत्त्वमसीत्यादिवाक्यजन्यज्ञानप्रसङ्ख्यानविधिपरत्वमाहुर्वेदान्तानाम् । तदेवं वादिविप्रतिपत्तौ सत्यां कथमात्मैकत्वप्रतिपत्तय एव सर्वेषां वेदान्तानां प्रारम्भ इति शक्यं वक्तुम् ? सन्ति हि वाक्यानि तैस्तैर्वादिभिः स्वाभिप्रायाविष्करणपरतया व्याख्यायमानानि । अतो न युक्तमिदं प्रतिभात्यात्मैकत्वविद्याप्रतिपत्तये सर्ववेदान्तारम्भप्रतिज्ञानमिति चेत् ॥

**७०. उक्तशङ्कापरिहारः** - अत्रोच्यते - **यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां**

**प्रदर्शयिष्यामः** । शरीरे भवः शारीरो जीवः । तस्य हि शरीरं भोगायतनम् । तत्र चासौ तादात्म्यताद्धर्म्यान्यतराध्यासेन मिथ्याभिमानं वहन् भवतीति शारीर इत्युच्यते । शारीर एव शारीरकः । तस्यास्य शारीरकस्य ब्रह्मात्मत्वं स्वभाविकं न यत्नान्तरसाध्यमिति वेदान्तेषूपदिश्यते "तत्त्वमसि" (छां. ६-८-७) इत्यादिभिः । तदिदं वेदान्तप्रतिपाद्यं शारीरकस्य ब्रह्मात्मत्वं न्यायपूर्वकं मीमांसित्वा निर्णीयतेऽनयेतीयं शारीरकमीमांसा । अस्यां हि मीमांसायां सर्वेषां वेदान्तानां साक्षादाराद्वा ब्रह्मात्मैकत्वे तात्पर्यं निर्णीयत इति वयमेतद्भाष्ये प्रदर्शयिष्याम इत्यर्थः ॥

तत्राऽऽत्मज्ञानस्य कर्मशेषत्ववादः "अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्" (३-४-८) इत्यादिसूत्रभाष्ये निरसिष्यते । कर्ममात्रेणाऽऽत्मन्यवस्थानं मुक्तिरिति वादस्तु युक्त्याभासकल्पितोऽवैदिक इति कार्याधिकरणभाष्ये प्रासङ्गिकसङ्गत्या पराकरिष्यते । उपासनावाक्यानामुपासनाविधिपरत्वेऽपि तद्व्यतिरिक्तान्यपि ब्रह्मवाक्यानि चिन्मात्रवस्तुपराणि सन्तीति समन्वयाधिकरणभाष्ये उभयलिङ्गाधिकरणभाष्ये च (३-२-११-२१) स्थापयिष्यते । ब्रह्मणश्चोपासनाविधिशेषत्वेनोपदेश इति वादस्तूक्ताधिकरणन्यायेनोपासनावाक्यानां ब्रह्मवाक्यानां च पार्थगर्थ्यदर्शनात् स्वतःसिद्धब्रह्मस्वरूपसमर्पकवाक्यानां चान्याकाङ्क्षाविरहात् निश्चितफलवद्विज्ञानजनकत्वाच्च न युक्त इति समन्वयाधिकरणभाष्ये प्रदर्शयिष्यते । प्रपञ्चप्रविलयवादस्तु ब्रह्मवाक्येषु नियोगासंभवादध्यासरूपाविद्यानिरसनव्यतिरेकेण प्रपञ्चप्रविलयस्यैवासंभवाच्चासङ्गत इत्युभयलिङ्गाधिकरणभाष्ये दर्शयिष्यते ।

पदार्थविवेकार्थं प्रसङ्ख्यानस्येष्टत्वेऽपि वाक्यार्थज्ञानोदये सति मुमुक्षोः कृतकृत्यत्वात् न कर्तृव्यशेषो विद्यत इति प्रसङ्ख्यान-वादोऽप्यावृत्त्यधिकरणे व्युदसिष्यते । द्वैतवादास्तु साङ्ख्य-योगवैशेषिकबौद्धार्हतप्रभृतयोऽविरोधलक्षणभाष्ये निराकरिष्यन्ते । सिद्धान्ते तैः प्रक्षिप्ता दोषाश्च तत्रैवोद्धरिष्यन्ते । भेदाभेदवादोऽपि भेददर्शननिन्दावाक्यैर्विरुद्धत्वात्, सम्यग्ज्ञानापनोद्यस्य मिथ्या-ज्ञानस्यैवाऽभावेऽनिर्मोक्षप्रसङ्गाच्चाऽयुक्त एवेति तदनन्यत्वाधि-करणेऽध्यवसास्यते । ये त्वधुनातनद्वैतवेदान्तिनोऽहंप्रत्ययगम्यात्म-वादतटस्थेश्वरवादजगत्सत्यत्ववादब्रह्मात्मशेषशेषिवादमुक्तितारतम्य-वादादिपङ्किलं सिद्धान्ताभासं वेदान्तार्थत्वेन कल्पयन्तः प्राचीनद्वैति-युक्तिप्रच्छर्दिकावष्टम्भा वेदान्तवाक्यान्यन्यथान्यथा नयन्तोऽविद्यमान-वाक्यान्यपि च कल्पयन्तः कदर्थयन्ति विशुद्धाद्वैतसिद्धान्तगङ्गां विविधाक्षेपप्रक्षेपेणाविलयितुमीहन्ते च ते व्यर्थप्रयासा भाष्योदित-विद्याविद्याविवेकप्रक्रियानभिज्ञत्वादेवोपेक्षणीयाः । तदेवं वादिविप्रति-पत्तेस्तावन्नास्ति कोऽप्यातङ्क आत्मैकत्वविद्याप्रतिज्ञायाः ॥

यद्यपि केचिद्वेदान्ताः सगुणोपासनापराः केचिच्चाब्रह्मभूत-प्राणाद्युपास्तीनां विधायकाश्च, तथा च न सर्वेषां वेदान्ता-नामात्मैकत्वोपदेशपरत्वं शक्यप्रतिज्ञानमिव । तथापि कार्यविधायकानां श्रुतीनां वस्तुस्वरूपनिर्धारणे तात्पर्याभावात् तात्पर्येणैक्यं निराकाङ्क्षं बोधयन्तीनामनुभवपर्यवसायिनीनां श्रुतीनां प्रामाण्यं निष्प्रत्यूहमेव । न चैवं विधायकश्रुतीनामप्रामाण्यम् । चित्तशुद्धिचित्तैकाग्र्यक्रम-मुक्त्यादिप्राप्तिद्वारा तेषामप्यात्मैक्यज्ञानप्राप्त्यर्थत्वस्य सुवचत्वात् । तथा हि श्रुतिः - "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन

दानेन तपसाऽनाशकेन" (बृ. ४-४-२२), "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति" (बृ. ४-४-२३) इति सर्वापेक्षाधिकरणभाष्ये विद्याज्ञानसाधनाधिकरणभाष्ये च निर्धारयिष्यते ॥

तदेवं सर्वे वेदान्ता अनाद्यविद्यान्निरासिकात्मैकत्वविद्यार्थाः, तन्निर्णयश्चास्यां शारीरकमीमांसायां भवितेति सर्वं सुस्थम् ॥

**७१. अविद्यां प्रति विविधशङ्कास्तत्परिहाराश्च** - ननु च श्रुतौ तावत् "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति ॥" (तै. ३-१) इति ब्रह्मणो जिज्ञास्यत्वमुक्तम् । इहापि च "अथातो ब्रह्मजिज्ञासा" इति तदनुगुणमेव ब्रह्मजिज्ञासा प्रस्तुता । युक्तं चैतत् । न हि जिज्ञासुरेव जिज्ञास्यो भवेत् । जिज्ञासुर्हि नामाऽज्ञाततत्त्वो यस्तत्त्वज्ञानमीप्सति । अतो जिज्ञासोरात्मनः सकाशाद्भिन्नमेव ब्रह्मेति युक्तम् । अन्यथा हि "अथातो ब्रह्मात्मैक्यजिज्ञासा" इति सूत्रं स्यात् । जिज्ञासोरात्मैव ब्रह्म चेत् तस्यैवाविद्या स्यात् । न वा कस्यचित् । तथा च जिज्ञासानारम्भ एव । अतो न युक्तेयं भाति भाष्यप्रतिज्ञा आत्मैक्यविषयिणीति चेत् ॥

न । ब्रह्मण एवात्मत्वात् । सर्वत्र हि वेदान्तेषु "तस्माद्वा एतस्मादात्मनः" (तै. २-१), "तत्सत्यं स आत्मा" (छां. ६-८-७) इत्येवं ब्रह्मण्येवात्मशब्दप्रयोगो दृश्यते । एकं च ब्रह्म । अत आत्मैकत्वविद्याप्रतिपत्तये इति प्रतिज्ञा तावन्नायुक्ता । नन्वात्मैव ब्रह्म चेत् "अथात आत्मजिज्ञासा" इत्येवास्तु किमनेन ब्रह्मजिज्ञासोपन्यासेनेति चेत् । न । आत्मन एव ब्रह्मत्वेनोपदिश्यमानत्वात् ।

यद्यप्यात्मैव ब्रह्म, ब्रह्मैव चात्मा । तथाप्येतद्याथात्म्याप्रबोधादात्मा सद्वितीयः संसारीव, ब्रह्म च सत्यज्ञानानन्दरूपं परोक्षमिव च । वेदान्तवाक्यजन्यज्ञानेनाप्रबोधहानौ त्वात्मैवाद्वितीयं ब्रह्मेति ज्ञायते । अतोऽत्राऽत्मन एव ब्रह्मस्वरूपताप्रतिपत्तये श्रुतिबोधितं ब्रह्मस्वरूपमज्ञातं जिज्ञास्यत इति न किंचिदनुपपन्नम् । यथोक्तं **वार्तिककारैः** - ब्रह्मता नाऽऽत्मनोऽन्यत्र नाऽऽत्मता ब्रह्मणोऽन्यतः । तद्याथात्म्याप्रबोधात्तु तयोरेष विपर्ययः ।। आत्मापि साक्षात्तद्ब्रह्म परोक्षं तदबोधतः । ब्रह्मैव तद्वदात्मापि सद्वितीयवदीक्ष्यते । वाक्योत्थसम्यग्विज्ञानप्रध्वस्ततमसो यतेः । विभागहेतोरुच्छित्तेः सर्वमात्मैव शिष्यते ।।" (बृ.वा. १-४-१३९०, १३९१, १३९२) इति । अतः श्रुतिसूत्राक्षरानुगुणमेव प्रक्रियारचनं भाष्यकृतः ।।

ब्रह्मण एव तर्हीयमविद्येत्यापन्नम् । न ह्यन्यद्ब्रह्मणः सकाशादस्तीति चेत् । भ्रान्तोऽसि । ब्रह्मणः सकाशाच्चेदन्यन्नास्ति कथं ह्यविद्या विद्या वा कस्यचिद्भवेत् । कस्मिंश्चिद्विषये हि कस्यचिदन्यस्य प्रतिपत्तुरविद्येति । अविद्याभ्युपगमात् तर्हि द्वैतवादप्रसङ्गः । न ह्यनभ्युपगमेऽविद्याप्रहाणाय वेदान्तारम्भ इति युज्यत इति चेत् । न । अभ्युगतद्वैतसत्यत्वस्यैवाविद्यावत्त्वावष्टम्भात् । न हि वयमविद्यां व्यसनितया रोचयामहे । अभ्युगतद्वैतसत्यत्वस्य तु पुरुषस्याविद्यासंबन्धं ब्रूमहे । तथा हि । द्वैताभ्युपगमे कोऽविद्यां निवारयेत् ? अद्वैते च कस्तस्य प्रसङ्गः ? एतेन यदि न कस्यचिदविद्या जिज्ञासानारम्भ एवेति चोद्यं निरस्तम् । न हि वयं विद्योदये सत्यपि जिज्ञासा भाविनीति ब्रूमहे येनेत्थमुपालम्भः स्यात् ।।

यदपि चोद्यते कैश्चित् - किंकृतेयमविद्या ? न हि कारणान्तर-

मस्ति येन स्वप्नादिवदागन्तुकी स्यादविद्या शुद्धब्रह्मसंसर्गिणी । कारणान्तराभ्युपगमे च द्वैतवादप्रसङ्गः । नैसर्गिकी त्वविद्यां ब्रुवाणस्य कथमस्याः प्रहाणमुपपद्यते ? न हि नैसर्गिक्याः समुच्छित्तिरवकल्पते । अविद्याप्रहाणिश्च कीदृशी ? किमविद्यारूपिण्येव, किं वा विलक्षणा ? यद्यविद्यारूपिण्येव, न तर्हि तस्याः प्रहाणिः । विलक्षणा चेत् तस्याः परमार्थत्वप्रसङ्ग इति सिद्धान्तहानिः स्यात् - इति । तदप्येतेनैव प्रत्युक्तं भवति । अविद्यादृष्ट्यैवाविद्याभ्युपगमात् । तत्प्रहाणेश्चानाविद्यकायाः कस्याश्चिदनभ्युपगमात् । यादृशो हि यक्षस्तादृशो बलिः । वस्तुतस्तु नाविद्यातत्प्रहाणिप्रयुक्तः कश्चिदपि विशेषोऽस्त्यद्वितीयात्मनः । तयोरप्यात्मैकस्वाभाव्यात् । तदुक्तं **बृहदारण्यकभाष्ये** - "अविद्यावतोऽविद्यानिवृत्त्यनिवृत्तिकृतो विशेष आत्मनः स्यादिति चेन्न । अविद्याकल्पनाविषयत्वाभ्युपगमात् रज्जूषरशुक्तिकागगनानां सर्पोदकरजतमलिनत्वादिवददोष इत्यवोचाम । तिमिरातिमिरदृष्टिवदविद्याकर्तृत्वाकर्तृत्वकृत आत्मनो विशेषः स्यादिति चेन्न । 'ध्यायतीव लेलायतीव' इति स्वतोऽविद्याकर्तृत्वस्य प्रतिषिद्धत्वात्, अनेकव्यापारसन्निपातजनितत्वाच्चाविद्याभ्रमस्य" (बृ.भा. ४-४-७) इति । **वार्तिके चाप्युक्तम्** - "चैतन्यमात्ररूपं सत्प्रथतेऽज्ञानमात्मनि । प्रत्यक्कूटस्थनिष्ठत्वात् तद्बाध्यं कारणेतरत्" (बृ. १-४-३०६) इति, "निवृत्तिः केवलात्मता" (बृ.वा. १-३-१८८) इति च । तदेवमविद्यानिवृत्तितद्धेतुविषयेऽपि नास्ति किञ्चिदसामञ्जस्यम् ॥

ननु चात्मैकत्वविद्या किंरूपिणी भवतोऽभिमता ? वाक्यार्थज्ञानरूपा चेत् ब्रह्मणो शब्दविषयत्वप्रसङ्गः । तथा च "यतो वाचो

निवर्तन्ते" (तै. २-९) इत्यादिश्रुतिभिर्विरोधः । वाक्यज्ञानाभ्यास-रूपत्वेऽपि दोषादनिस्तार एव । वाक्यार्थज्ञानादन्या चेत् तदर्थं वेदान्ता आरभ्यन्त इत्युक्तिर्व्याहता स्यात् । तथा चाऽऽत्मन उपनिषदेकप्रकाश्यत्वमपि त्यक्तं स्यात् । "तं त्वौपनिषदं पुरुषं पृच्छामि" (बृ. ३-९-२७) इत्यादिश्रुतिविरोधश्च प्रसज्येतेति चेत् । तदपि न । वाक्यज्ञानेनाविषयत्वेनैव ब्रह्मणः समर्पणात् । उक्तं च प्राग्यथा श्रुतिवाक्यमात्मनोऽतद्धर्मप्रतिषेधेनैव प्रामाण्यं भजत इति । अतो नायमपि दोषः ॥

ननु - विदुषामपि द्वैतप्रपञ्चो भासते न वा ? भासते चेत्तेषां का विद्वत्ता ? न भासते चेत् कथं सम्प्रदायप्रवर्तकाचार्यभावत्वम् ? अथ प्रारब्धकर्मशेषेण तत्फलभोगार्थं द्वैतानुवृत्तिः स्वीक्रियेत । तदा तदाक्षिप्ताविद्यालेशोऽप्यवश्यमाक्षिप्येत । तथा च विद्वत्त्वमविद्वत्त्वं चैकस्यैव पुरुषस्य सह भवेताम् । तदेवं सर्वथाप्यसमञ्जसैवेयं प्रक्रिया भातीति चेत् । न । प्रारब्धकर्मशेषेण बाधितद्वैतप्रतिभास-स्यैव द्विचन्द्रज्ञानवदनुवृत्तिरिति प्रागेवाऽऽवेदितत्वात् । अविद्या-लेशस्त्वनभ्युपगमादेव निरस्तः । का तर्हि द्वैतज्ञानस्य विदुष्यप्यनुवर्तमानस्य गतिः ? न हि द्वैतज्ञानं विना गुरुशिष्यादिव्यव-हारः सेत्स्यतीति चेत् । बाधितानुवृत्तिरेव गतिः । उक्तं हि **बृहदारण्यकभाष्ये** - "न च विपरीतप्रत्ययो विद्यावत उत्पद्यते । निर्विषयत्वात् । अनवधृतविषयविशेषस्वरूपं हि सामान्यमात्रमा-श्रित्य विपरीतप्रत्यय उत्पद्यमान उत्पद्यते, यथा शुक्तिकायां रजतमिति । स च विषयविशेषावधारणवतोऽशेषविपरीत-प्रत्ययाश्रयस्योपमर्दितत्वान्न पूर्ववत् संभवति । शुक्तिकादौ

सम्यक्प्रत्ययोत्पत्तौ पुनरदर्शनात् । क्वचित्तु विद्यायाः पूर्वोत्पन्न-विपरीतप्रत्ययजनितसंस्कारेभ्यो विपरीतप्रत्ययावभासाः स्मृतयो जायमाना विपरीतप्रत्ययभ्रान्तिमकस्मात् कुर्वन्ति । यथा विज्ञात-दिग्विभागस्याप्यकस्माद्दिग्विपर्ययभ्रमः । सम्यग्ज्ञानवतोऽपि चेत् विपरीतप्रत्यय उत्पद्यते, सम्यग्ज्ञानेऽप्यविस्रंभात् शास्त्रार्थविज्ञानादौ प्रवृत्तिरसमञ्जसा स्यात् । सर्वं च प्रमाणमप्रमाणं संपद्येत, प्रमाणाप्रमाणयोर्विशेषानुपपत्तेः" (बृ.भा. १-४-१०) इति ॥

ननु चैवं बाधकेन ज्ञानेन भेदज्ञानकारणस्यानाद्यज्ञानस्य सर्वथा विनष्टत्वात् कथं भेदज्ञानानुवृत्तिः ? तदभावे च कथं शिष्येभ्यस्तत्त्वज्ञानोपदेशः ? तदनुवृत्तौ स्वयमज्ञस्य कथमाचार्यत्वम् ? बाधितानुवृत्तिस्वीकारेऽपि कथं मिथ्याविषयत्वनिश्चये सत्युपदेशाय प्रवृत्तिः ? कथं च नित्यनिवृत्ताज्ञानस्य भगवतोऽर्जुनं प्रति गीतोप-देशः ? तस्माद्विद्याविद्यास्वरूपविभागोऽयमसमञ्जस एवेति नः प्रतिभातीति चेत् । अत्र प्रष्टव्यो भवान् । किं द्वैतसत्यत्व-बाधकमद्वैतज्ञानमङ्गीकृत्येदं प्रश्नजालं प्रतायतेऽथवा अनभ्युप-गम्येति । तत्र प्रथमे कल्पे तावन्न प्रश्नो नापि चोत्तरम् । न ह्यद्वितीयतत्त्वज्ञाने सति पुनरपि किंचिच्चोद्यं भवति । द्वितीये तु कल्पेऽज्ञदृष्ट्या सर्वोऽप्ययं व्यवहारोऽवकल्पत एवेति न कस्यचिदाक्षेपस्यावकाशः । न ह्यद्वैतसिद्धान्ते ज्ञानोत्पत्त्यज्ञानबाध-गुरुशिष्यभेदोपदेशादिकं परमार्थ इत्यभ्युपगम्यते प्रपञ्चसद्भावत-न्निवृत्ती वा पारमार्थिके इति । द्वैतज्ञानसन्दूषितचित्तानां तु शिष्याणां क्रमेण बोधनायेदं सर्वं प्रक्रियारचनमिति नात्र किंचिदसामञ्जस्यम् । यथाऽऽह भगवान् **भाष्यकारः** – "एकस्मिन् ब्रह्मणि निरुपाधिके नोपदेशो नोपदेष्टा न चोपदेशग्रहणफलम्" (बृ.भा. २-१-२०) इति ।

**श्रीमद्गौडपादाश्च** - "प्रपञ्चो यदि विद्येत निवर्तेत न संशयः । मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।। विकल्पो विनिवर्तेत कल्पितो यदि केनचित् । उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ।।" (मां.का. १-१७, १८) इति । एतेन भ्रान्तिबाधयोरस्तित्वनास्तित्वविकल्पनमपि प्रत्युक्तं वेदितव्यम् । तयोरप्यध्यारोपदृष्ट्यैव सत्त्वात्, परमार्थतश्चानङ्गीकारात् । किं बहुना यद्यदाक्षिप्यतेऽत्र प्रक्रियायां यद्यच्च परिह्रियते तदुभयमप्यध्यारोपदृष्ट्यैव शिष्यव्युत्पादनार्थम्, न तु वास्तविकत्वमभिप्रेत्येत्येष अध्यासभाष्यसारः । अत एवाहुः सांप्रदायिकाः - "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति ।।

**७२. उपसंहारः** - तदेवं सर्वेऽपि वेदान्ता आत्मैकत्वविद्याप्रतिपत्तय आरभ्यन्ते । विद्यायाश्च फलं संसारानर्थहेतोरविद्यायाः प्रहाणम् । तदेतदुभयमत्र शारीरकमीमांसायां न्यायतो निर्णेष्यत इति सूचितम् "अथातो ब्रह्मजिज्ञासा" इति सूत्रेण । अत्र च विद्यया प्रहातव्यत्वेन सूत्रिता येयमविद्या सा सत्यानृतयोरात्मानात्मनोरन्योन्याध्यासरूपैव, विद्या चाऽऽत्मनोऽद्वितीयब्रह्मरूपेण निर्धारणमेवेति विशदयितुमयं भगवतो भाष्यसन्दर्भः सकलशास्त्रोपोद्घातरूपः, तथा च व्याख्यातमस्माभिरिति सर्वं शिवम् ।।

*अध्यस्तमातृमानादिप्रपञ्चोऽयं परः पुमान् ।*
*स्वतःसिद्धश्च सर्वात्मा शङ्करः श्रुतिगोचरः ।।*

*अहं देही स्वेच्छाकलितविषयग्राहिकरण-*
*स्तथा कर्ता भोक्ता विविधफलवत्कर्मनिरतः ।*

*सुखी दुःखी जीर्णो मरणमुपगन्तेति तमसा*
*विमूढो लोकोऽयं स्वमिह पररूपं स्थगयति ॥१॥*

*सत्यं ज्ञानमनन्तमेकममलं सर्वात्मभूतं च यत्*
*स्वात्मस्थं सदपीह नैच्यमगमन्मिथ्यामनीषाजुषाम् ।*
*जिज्ञास्यं जगतोऽस्य कारणमिति त्रय्यन्तमेयं च य-*
*न्निर्दिश्यापवदन्ति नेति निगमास्तच्छाङ्करं स्वं महः ॥२॥*

*एकं तत्त्वं यदिह सकलं दृश्यते श्रूयते वा*
*सत्यं सत्यं त्वमसि तदिति श्रावयद् वेदवाक्यम् ।*
*भाष्यव्याख्यां विमृश सुगमामेतदर्थावगत्यै*
*मूलाविद्यां जहिहि विततां सच्चिदानन्ददृष्ट्या ॥३॥*

इति श्रीमत्पूज्यपादशङ्करभगवच्चरणनिरन्तरस्मरण
परिचयावाप्तवेदान्तप्रवेशेन
श्रीसच्चिदानन्देन्द्रसरस्वतीभिक्षुणा निर्मिता
सुगमाख्या व्याख्या
समाप्तिमगमत्
ॐ तत्सत्

---

# सुगमाग्रन्थस्य शुद्धाशुद्धपट्टिका

## प्रास्ताविक भागे :-

| | पङ्क्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| प्रथमपुटे | ५ | पातञ्जलांदि | पातञ्जलादि |
| | ६ | व्याख्यानचालित | व्याख्यानचालित |
| | १० | सुगमां नार्म्नी | सुगमानार्म्नी |
| द्वितीयपुटे | ४ | स्वकर्मणो-च्चावच | स्वकर्मणोच्चावच |
| | ७ | स्वांत्मन्यवस्था | स्वात्मन्यवस्था |
| | ८ | यद्यंपि | यद्यपि |
| | ११ | विंज्ञाप्य | विज्ञाप्य |
| तृतीयपुटे | १२ | विशेषानपन्हूय | विशेषानपन्हुत्य |
| | २२ | पुरस्थित | पुरःस्थित |
| चतुर्थपुटे | ८ | एंवमेव | एवमेव |
| | २२ | सत्यनृतयोर्न | सत्यानृतयोर्न |
| पञ्चमपुटे | २ | समस्तिः | समस्ति । |
| | ८ | एवेत्यवगम्यंते | एवेत्यवगम्यते |
| षष्ठपुटे | ६ | पण्डितप्रवरो | पण्डितप्रवर |
| | ७ | ब्रह्मंश्रीयुक्तः | ब्रह्मश्रीयुक्तः |
| | ११ | ब्रह्मंश्रीयुक्तो | ब्रह्मश्रीयुक्तः |
| | १६ | ऽवतिर्णो न | ऽवतीर्णे न |
| | १६ | भासा- | भासा |
| | १७ | माद्दृशामपि | मादृशामपि |
| द्वितीय प्रस्तावन भागे | ३ | संहकारेण | सहकारेण |

## ग्रन्थभागे :-

| पुटसंख्या | पङ्क्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | २२ | अतो अस्मत्प्रत्यय | अतोऽस्मंत्प्रत्यय |
| ६ | ४ | ऽस्मत्यप्रत्यय | ऽस्मत्प्रत्यय |
| ७ | ७ | तंदा | तदा |
| १६ | २१ | शास्त्रस्य सुंख- | शास्त्रस्य सुख- |

| पुटसंख्या | पङ्क्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १९ | १३ | निबन्धग | निबन्धन |
| | १४ | कुत्राचित् | कुत्रचित् |
| २१ | ३ | धरर्मि | धर्मि |
| | १९ | तस्या | तस्या |
| २५ | १ | वर्णस्या | वर्णनस्या |
| २७ | १ | वर्णस्या | वर्णनस्या |
| | ११ | शुंक्ति | शुक्ति |
| २९ | १ | वर्णस्या | वर्णनस्या |
| ३१ | ८ | चिंदात्मके | चिदात्मके |
| ३२ | १५ | पुनर्विष | पुनर्विषय |
| ३५ | १ | आत्मानो | आत्मनो |
| | अ ३ | तस्मादहं प्रत्यया | तस्मादहंप्रत्यया |
| ३६ | ८ | प्रत्यागात्मा | प्रत्यगात्मा |
| ३८ | ५ | यथार्थरूपेतैवेति | यथार्थरूपतैवेति |
| | ६ | प्रसिद्धिरस्त्यस्त्याऽऽत्मनो | प्रसिद्धिरस्त्यस्याऽऽत्मनो |
| | १२ | प्रसिद्धौ | प्रसिद्धो |
| | १३ | अथ | अतः |
| ३९ | १३ | प्रमाणसिद्धित्वं | प्रमाणसिद्धत्वं |
| ४१ | १० | कथनात् । | कथनात् |
| | १२ | अध्यसस्य | अध्यासस्य |
| ४२ | ९ | पण्डिता | पण्डिताः |
| ४३ | ८ | त्वदभ्यूहिता | त्वदभ्यूहिता |
| ४४ | ६ | जागारित | जागरित |
| | २३ | विद्याभावेऽपि | विद्याभावोऽपि |
| | २३ | शुक्त्यविद्य | शुक्त्यविद्या |
| ४५ | ३ | तत्त्वधिष्ठा | तत्तदधिष्ठा |
| ४७ | ११ | संसारानार्थ | संसारानर्थ |
| | अ १ | द्युपादानानपेक्षणातं् | द्युपादानानपेक्षणात् |
| ४८ | ६ | वृत्यातिरिक्त | वृत्त्यतिरिक्त |

| पुटसंख्या | पङ्क्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४९ | १९ | कूटस्थाज्ञप्ति | कूटस्थज्ञप्ति |
| ५० | १२ | ऽनंदि | ऽनादि |
| ५१ | १ | कल्पनायोगात् न हि | कल्पनायोगात् । न हि |
| | २४ | रूपोऽत्थं | रूपोत्थं |
| ५२ | ३ | अविद्या निवर्तनं | अविद्यानिवर्तनं |
| | १५ | पुनरविद्यानुवृत्तिर्दश्यते | पुनरविद्यानुवृत्तिर्दृश्यते |
| ५३ | ८ | तस्मादात्मानांत्म | तस्मादात्मानात्म |
| ५४ | ७ | विद्या | विद्यया |
| | ७ | इति | इहि च |
| | १६ | स्वावसार | स्वावसरे |
| ५५ | ३ | तमेतमविद्याख्या | तमेतमविद्याख्य |
| | अ ५ | प्रमण | प्रमाण |
| | अ १ | प्रंवर्तन्ते | प्रवर्तन्ते |
| ५८ | २ | प्रवृति | प्रवृत्ति |
| | २४ | प्रमाणप्रमेय व्यवहारा | प्रमाणप्रमेयव्यवहारा |
| ५९ | अ १ | प्रकाशानाय | प्रकाशनाय |
| | अ २ | निष्ठ | निष्ट |
| ६२ | १६ | गवयप्रति-पत्तिरित्यत | गवयप्रतिपत्तिरित्यत |
| | २२ | तथपि | तथापि |
| ६५ | १६ | कशचिद् | कश्चिद् |
| | २२ | अध्यास्तात्मभाव | अध्यस्तात्मभाव |
| | अ १ | सत्वेंऽपि | सत्वेऽपि |
| ७१ | ४ | स्मृत्याद्यपेक्षेन्ते | स्मृत्याद्यपेक्षन्ते |
| ७२ | २ | तादृशाव्यवहार | तादृशव्यवहार |
| | अ १ | पुरुषां | पुरुषा |
| ७४ | ७ | मनात्मांनं | मनात्मानं |
| ७६ | १३ | त्मज्ञा नमपेक्षते | त्मज्ञानमपेक्षते |
| | १४ | प्रवृत्तिरुपोपद्यते | प्रवृत्तिरुपपद्यते |
| | १९ | कर्मप्रारभते | कर्म प्रारभते |

| पुटसंख्या | पङ्क्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७७ | ७ | कुत्राचिदपि | कुत्रचिदपि |
| ७८ | १५ | तद्व्याहतमित्याह | तदव्याहतमित्याह |
| ७९ | अ १ | ज्ञानं मप्येपेक्ष्यते | ज्ञानमप्यपेक्ष्यते |
| ८१ | अ १ | प्रवृत्तानींति | प्रवृत्तानीति |
| ८७ | ६ | लब्धसक्ताकत्वात् | लब्धसत्ताकत्वात् |
| ८८ | ७ | बधिरोऽहम् | वधिरोऽहम् |
| ८९ | ६ | द्रष्टुधर्म | द्रष्टृधर्म |
| | ८ | परिहर्तुमिदंमुच्यते | परिहर्तुमिदमुच्यते |
| ९४ | ५ | ज्ञातृव्यं | ज्ञातृत्वं |
| ९५ | ८ | प्रमाणसिद्धों | प्रमाणसिद्धो |
| | १७ | चेदन्त्वं | चेदत्वं |
| ९६ | १४ | पत्यय व्यपदेश्यत्वं | प्रत्ययव्यपदेश्यत्वं |
| | १५ | चिद । भासत्व | चिदाभासत्व |
| | १६ | भिपेत्ये | भिप्रेत्ये |
| ९७ | अ ५ | बुद्ध्यास | बुद्ध्यध्यास |
| ९९ | अ १ | शंका | शंका- |
| १०० | अ ६ | अध्यासाविद्यायो | अध्यासाविद्येयो |
| १०१ | २० | अभ्युहितमपि | अभ्युहितुमपि |
| १०२ | ७ | विवेकप्रकाशाभावे | विवेकप्रकाशभावे |
| ११२ | २ | कर्तृव्यशेषो | कर्तव्यशेषो |
| ११३ | ५ | निरासिकात्मैकत्व | निरासकात्मैकत्व |
| ११४ | ६ | ब्रह्मता | "ब्रह्मता |
| | १७ | अभ्युगत | अभ्युपगत |
| | १८ | अभ्युगत | अभ्युपगत |
| ११७ | अ ११ | प्रतिभातिति | प्रतिभातीति |
| | अ १ | ग्रहणफंलम् | ग्रहणफलम् |

❋❋❋

**मूलाविद्यानिरासः अथवा श्रीशङ्करहृदयम् :** श्रीसच्चिदानन्देन्द्रसरस्वतीभिः पूर्वाश्रमे विनिर्मितं प्रकरणमिदं पूज्यपादानां श्रीशङ्करभगवत्पादानां वेदान्तप्रक्रियारहस्य भेदकानां गभीराशयं विवृणोति । सर्वत्र चात्र प्रमाणवाक्यान्युदाहृतानि परःशतम् श्रीमद्भाष्यकृतां तत्साक्षादन्तेवासिनां श्रीसुरेश्वराचार्याणां सुप्रसिद्धमाण्डूक्यकारिकाकृतां श्रीगौडपादाचार्याणां च । अनुशाङ्करवेदान्तिभिः संप्रदायविरोधेन नूत्नतया अभ्यूहितस्य औपनिषदप्रक्रियामलिनीकरणमूलस्य मूलाविद्यावादस्य समूलोत्पाटनसूपोऽयं निबन्धः सम्यग्दर्शनलालसजनग्राहिशुष्कतर्कपिशाचोच्चाटने महामन्त्ररूपो विजयते ।।

**गीताशास्त्रार्थविवेकः :** अत्र सांख्य-योग-कर्मध्यानादिपदार्थविवेकपूर्वकं कर्मयोग ध्यानयोगादीनां परस्परसंबन्धो निरूपितः । गीताशास्त्रस्य सांख्ययोगदर्शनाभ्यां वैलक्षण्यं च स्फुटीकृतम् ।

**माण्डूक्यरहस्यविवृतिः :** श्री सच्चिदानन्देन्द्रसरस्वतीभिरनुगृहीतायाम् अन्वर्थाभिधानायामस्यां व्याख्यायां माण्डूक्योपनिषदि गर्भीकृतानि नैकानि रहस्यानि श्रीगौडपादसंमतवेदान्तप्रक्रियानुसारेण तथा विवृतानि यथा मोक्षमाणानां जिज्ञासूनामस्याः श्रवणमननाभ्यां छिद्येरन् सर्वसंशयाः भिद्येत च हृदयग्रन्थिरात्मसत्यानुबोधेन । श्रीशङ्कर भगवत्पादभाष्यवाक्यार्थश्च प्रतिपदं प्रस्थानत्रयभाष्यान्तरवाक्यान्तरसंगानेन मतान्तर दोषाविष्करणपूर्वकं तथा व्याकृतो यथा विशुद्धसंप्रदायाध्वना गतिर्निर्विघ्ना भवेत् पाठकानाम् । विशिष्य च अलातशान्तिप्रकरणे प्राचीनग्रन्थतत्त्वशोधकोत्थापित-मतान्तरसंक्रान्तिशङ्कानिरसनपूर्वकं श्रीगौडपादसंमता वेदान्तप्रक्रिया प्रदर्शिता, पूर्वतन-प्रकरणत्रयप्रकियया एकवाक्यतां गमिता च । आङ्गलभाषामय्या गैर्वाणवाणीमय्या च भूमिकया श्रीगौडपादसंमतप्रक्रियाया असाधारणं स्वरूपं माहायानिकप्रक्रिया-वैलक्षण्यस्फुटीकरणपूर्वकं हृदयंगमं कृतम् ।।

**वेदान्तप्रक्रियाप्रत्यभिज्ञा :** अत्र खलु सर्वत्र वेदान्तेष्वेकैव प्रकिया अध्यारोपाप-वादन्यायाभिख्या नानावेषधारिणी प्रयुक्ता अनाद्यविच्छिन्नपरम्परया वेदान्ताभियुक्तैः परि गृहीतास्तीत्येतत् सुस्पष्टमदर्शितम् । यथा चैतन्निर्दुष्टप्रक्रियातः प्रच्युतेरेव हेतोः सर्वेऽपि वावदूकाः परस्परविरोधं परिहर्तुं न प्राभवन् वेदान्तोपदिष्टमात्मैकत्वं चानुभवारूढ-मापादयितुं नाशक्नुवन् इत्येतद् स्फुटीकृतम् । आधुनिकविचारसरणेरभिलाषुकानां कृते त्रयस्त्रिंशदधिकशतपत्रपार्श्वमितया आंग्लभूमिकयापि संयोजितः ।।

**सर्वेषामपि पुस्तकानां प्रापणव्ययस्तु पृथगेव प्रापणस्थानम्**

**अध्यात्मप्रकाशकार्यालयः, होळेनरसीपुरम्. 573211**

**दूः 08175-73820**